मेधातिथिः क्षितीशश्च वीतरागसुषेणकौ ।
सौभरि-रत्नगर्भौ च[1] तथा विप्रः सुधानिधिः ॥ १७ ॥
तैरूढ़ा नृपतेर्व्वाक्यात् सप्त सप्तशतात्मजाः ।
तद्दैववशतो जातास्तासु सप्त सुता वराः ।
वरेन्द्रं गताः पञ्च कनिष्ठौ राढ़संस्थितौ ॥ १८ ॥

नृपेन्द्रेनादिशूरेण चानीतं विप्रपञ्चकम् ।
पञ्चगोत्रान्वितं तेषां नाम गोत्रञ्च कथ्यते ॥ १९ ॥
श्रीहर्षस्य भरद्वाजो दक्षस्य काश्यपः स्मृतः ।
वेदगर्भस्य सावर्णो वात्स्यश्च छान्दड़स्य च ।
शाण्डिल्यगोत्रः कथितो भट्टनारायणस्य च ॥ २० ॥
भट्टतः षोड़शोद्भूता दक्षतश्चापि षोड़श ।
चत्वारः श्रीहर्षजाता भरद्वाजकुलोद्वहाः ।
द्वादश वेदगर्भाच्च तथैकादश छान्दड़ात् ॥ २१ ॥
केचिद्विप्रा आगताश्च वैदिका वेदपारगाः ।
पाश्चात्या दाक्षिणात्याश्च शेषोक्ता द्राविड़ाः स्मृताः ॥ २२ ॥

बल्लालविषये नूनं कुलीना देवताः स्वयम् ।
श्रोत्रिया भैरवो ज्ञेया घटकाः स्तुतिपाठकाः ॥ २३ ॥
आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् ।
निष्ठावृत्तिस्तपोदानं नवधा कुललक्षणम् ॥ २४ ॥
काममामरणात् तिष्ठेत् गृहे कन्यर्त्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु कुलहीनाय कर्हिचित् ॥ २५ ॥

---

(१) ख सौभरीरत्नगर्भश्च ।

विचिन्वत्केभ्यो वो विचिण्वत्केभ्यश्च नमो नमः ।
आनिर्हतेभ्यो युष्मभ्यं नमामि च पुनः पुनः ॥ ६२ ॥
भो अन्धसस्पते द्रापे दरिद्र नीललोहित ।
प्रजानां नः पशूनाञ्च माभेर्मारोक् कथञ्चन ॥ ६३ ॥
इमा नो रुद्राय मतीस्तवसे प्रभरामहे ।
ग्रामे विश्वेऽयथा शंस्याद्विपदे च चतुष्पदे ॥ ६४ ॥
या ते रुद्र शिवतनूः शिवविश्वाहभेषजी ।
रुद्रस्य भेषजी रुद्र तया नो मृड़ जीवसे ॥ ६५ ॥
रुद्रस्य हेतिः परितो वृणक्तु
त्वेषस्य चास्मासु न दुर्म्मतिश्च ।
स्थिराणि रुद्र ह्यवतारय त्वम् ।
तोकाय पौत्राय सुखं यथा स्यात् ॥ ६६ ॥
मीढुष्टम शिवतम शिवो नः सुमना भव ।
निधाय परमे वृत्ते आयुधं तव शङ्कर ॥ ६७ ॥
कृत्तिं वसान आगच्छ पिनाकं धारयन् शिवः ।
नमस्तुभ्यं भगवते विकिरिद्रविलोहित ॥ ६८ ॥
या हेतयः सहस्रन्तेऽस्मदन्यं निवपन्तु ताः ।
यास्तव हेतयो वाह्वोः सहस्राणि सहस्रशः ॥ ६९ ॥
तासामीशानो भगवन् पराचीना मुखाकृधि ।
असंख्याताः सहस्राणि ये रुद्रा अधि भूतले ॥ ७० ॥
तेषां सहस्रयोजने धन्वानि ह्यवतन्मसि ।
अस्मिन्महत्यन्तरीक्षेऽर्णवे सन्ति भवास्तु ये ॥ ७१ ॥

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No. 1070.



# VALLĀLA CARITAM.

# वल्लालचरितम् ।

ĀNANDA BHAṬṬA

MAHĀMAHOPĀDHYĀYA HARAPRASĀD SHĀSTRĪ M.A.

FASCICULUS I. (Text only.)

CALCUTTA:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1904.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## Asiatic Society of Bengal,

No. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO., 46, GREAT RUSSELL STREET, LONDON, W.C., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—so of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

*Sanskrit Series*

Advaita Brahma Siddhi, (Text) Fasc 1-4 @ /6/ each ... Rs 1
Advaitachinta Kaustubhe, Fasc. 1 ... 0
*Agni Purāṇa, (Text) Fasc 4-11 @ /6/ each .. 4
Aitarēya Brāhmana, Vol. I, Fasc. 1-5 and Vol. II, Fasc. 1-5 Vol III, Fasc. 1 5 Vol IV, Fasc 1 5 @ /6/ ... 7
Aṇu Bhāṣyam, (Text) Fasc. 1 5 @ /6/ each ... 1
Aphorisms of Sāṇḍilya, (English) Fasc 1 ... 0
Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc 1-6 @ /6/ each ... 2
Açvavaidyaka, (Text) Fasc. 1-5 @ /6/ each ... 1
Avadana Kalpalatā, (Sans. and Tibetan) Vol I, Fasc 1-5; Vol II Fasc 1-5 @ 1/ each ... 10
Bal Bhatta Fasc 1 @ /6/ each ... 0
Bandhaya Banta Sutram Fasc. 1 @ /6/ each ... 0
*Bhāmatī, (Text) Fasc 4-8 @ /6/ each ... 1 1
Bhāṭṭa Dīpikā Vol I, Fasc 1-4 ... 1
Bṛhaddēvatā (Text) Fasc. 1-4 @ /6/ each ... 1
Bṛhaddharma Purāṇa (Text) Fasc 1 6 @ /6/ each ... 2
Bodhicaryavatara of Cantidevi, Fasc 1 ... 0
Catadusani Fasc 1 ... 0
Catalogue of Sanskrit Books and MSS, Fasc 1-4 @ 2/ each ... 8
Çatapatha Brāhmaṇa, Vol I, Fasc. 1 7, Vol II. Fasc I-2 ... 3
Çatasāhasrikā Prajnāpāramitā (Text) Fasc 1 to 6 @ /6/ each ... 2
*Caturvarga Chintāmaṇi (Text) Vols. II, 1-25; III. Part I, Fasc 1 18, Part II, Fasc 1-10 @ /6/ each ... 19 1
Çlockavartika, (English) Fasc 1 4 ... 3
Çrāddha Kṛyā Kaumudī (Text) Fasc 1-5 @ /6/ each ... 1 1
*Çrauta Sūtra of Āpastamba (Text) Fasc 4-16 @ /6/ each ... 4 1
Ditto Çānkhāyana, (Text) Vol I, Fasc 1-7; Vol. II, Fasc. 1 4, Vol III, Fasc. 1-4 @ /6/ each ... 5 1
Çrī Bhāshyam, (Text) Fasc 1-3 @ /6/ each ... 1
Dana kriyā kau[illegible]mudī, Fasc 1-2 @ /6/ ... 0
Gadadhara Padd[illegible] Kālasāra Vol. I, Fasc 1-6 ... 2
Kāla Mādhava, (Text) F[illegible]asc. 1 4 @ /6/ each ... 1
Kāla Viveka, Fasc 1-6 ... 2
Kātantra, (Text) Fasc 1-6 @ /12/ each ... 4
Kathā Sarit Sāgara, (English) Fasc. 1-14 @ /12/ each ... 10
Kūrma Purāṇa, (Text) Fasc 1-9 @ /6/ each ... 3
Lalita-Vistara, (English) Fasc 1-3 @ /12/ each ... 2
Madana Pārijāta, (Text) Fasc 1-11 @ /6/ each ... 4 2
Mahā-bhāsya-pradīpōdyōta, (Text) Vol I, Fasc 1-9 II, Fasc. 1-10 @ /6/ each 7 2
Manuṭīkā Sangraha, (Text) Fasc. 1-3 @ /6/ each ... 1 2
Mārkaṇḍēya Purāṇa, (English) Fasc. 1-7 @ /12 each ... 5 4
*Mīmāṁsā Darçana, (Text) Fasc. 7-19 @ /6/ each ... 4 14
Nārada Smṛti, (Text) Fasc 1-3 @ /6/ ... 1 2
Nyāyavārtika, (Text) Fasc. 1-4 @ /6/ ... 1 8
*Nirukta, (Text) Vol. III Fasc. 1-6 Vol. IV, Fasc. 1-8 @ /6/ each ... 5 4
Nityācāra Paddhatiḥ (Text) Fasc. 1-7 ... 2 10
Nityācārapradīpaḥ (Text) Fasc 1-3 ... 1 2
Nyayabinduṭīkā, (Text) ... 0 10
Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-3 @ /6/ each ... 3
Paduunawati Fasc. 1-3 @ 2/ ... 6

# वल्लालचरितम्

ओं नमो विघ्नविनाशकाय ॥

प्रणमामि जगत्सृष्टि-स्थिति-संहारकारणम्।
विश्वेश्वरं विश्वधरं विश्वं च विश्वहेतुकम्॥ १

जगद्बीजं सत्त्वरूपं सर्व्वसाक्षिणमव्ययम्।
सर्व्वेशं सर्व्वभूतस्थं सर्व्वशक्तिधरं विभुम्॥ २ ॥

ब्राह्मणेभ्यो नमस्कृत्य नवद्वीपनृपाज्ञया।
ब्राह्मणानां समुत्पत्ति-तद्भेदादि-समन्वितम्।
राढ़ीयाणां वरेन्द्राणां गोत्रगाञी-समन्वितम्।
वल्लालचरिताख्यं तद्राजचरितमुच्यते॥ ३ ॥

सिसृक्षोर्ब्रह्मणो जातः पुलहो वामकर्णतः।
अङ्गिरा नासिकारन्ध्रादजायत मुखाद्रुचिः॥ ४ ॥
मरीचिः स्कन्धदेशाच्च प्रचेता अधरोष्ठतः।
एकादश चैव रुद्रा ललाटात् क्रोधसम्भवाः॥ ५ ॥
पुलहस्य सुतो वात्स्यः शाण्डिल्यश्च रुचेः सुतः।
बृहस्पतेराङ्गिरसो भरद्वाजः सुतः स्मृतः॥ ६ ॥

मरीचेर्मनसो जातः कश्यपश्च प्रजापतिः ।
प्रचेतसोऽपि मनसो गौतमो भगवानृषिः ॥ ७ ॥
सावर्णिर्गौतमाज्जज्ञे मुनिप्रवर एव सः ।
बभूवुः पञ्चगोत्राणि चैतेषां प्रवरा भवे ॥ ८ ॥
बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः ।
ताः स्थिताः देशभेदेन गोत्रशून्याश्च भूपते ॥ ९ ॥
अदित्यां द्वादशादित्यान् जनयामास कश्यपः ।
अत्रेर्नेत्रमलाच्चन्द्रः क्षीरोदे च बभूव ह ॥ १०
चन्द्रादित्यमनूनाञ्च प्रवराः क्षत्रियाः स्मृताः ।
ब्रह्मणो बाहुदेशाच्चैवान्याः क्षत्रियजातयः ।
ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः ॥ ११ ॥
जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते ।
वेदपाठाद्भवेद्विप्रो ब्राह्मणो ब्रह्मविद्यया ॥ १२ ॥
सारस्वताः कान्यकुब्जा गौड़ा मैथिलकोत्कलाः ।
पञ्चगौड़ाः समाख्याताः विन्ध्यस्योत्तरवासिनः ॥ १३ ॥
कर्णाटाश्चैव तैलङ्गाः गुर्ज्जरा राष्ट्रवासिनः ।
अन्ध्राश्च द्रविड़ाः पञ्च विन्ध्यदक्षिणवासिनः ॥ १४ ॥
सर्व्वे द्विजाः कान्यकुब्जाः माथुरं मागधं विना ।
मागधो ब्रह्मणा पूर्व्वं कल्पितो द्विज एव च ।
वराहस्य च घर्म्मेण माथुरो जायते तथा ॥ १५ ॥
वेदबाणाङ्कशाके तु गौड़े विप्राः समागताः ।
हययानं समारुह्य सर्व्वशास्त्रविशारदाः ॥ १६ ॥

एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च ।
षट्कर्म्म-निरतो विप्रः श्रोत्रियो नाम धर्म्मवित् ॥ २६ ॥
गुणानुसारतोऽकारि कुलीनश्चैव मौलिकः ।
वंशजश्च पुरा राज्ञा बल्लालेन सुनिश्चितम् ॥ २७ ॥

इति बल्लालचरिते वर्णानामुत्पत्तिकथनम् ॥

---

## अथ प्रतिग्राहि-संज्ञा-कारण-कथनम् ।

धेनुं स्वर्णमयीं यज्ञे विप्रेभ्यः प्रददौ नृपः ।
धेनोस्तस्याः स्वर्णमय्याश्छेदने पतितोऽभवत् ॥ २८ ॥
ततो निर्व्वासितो राज्ञा कश्चन स्वर्णकारकः ।
विप्राः प्रतिग्रहाज्जाताः सर्व्वधर्म्मवहिष्कृताः ॥ २९ ॥

इति प्रतिग्राहिकारणम् ।

---

## अथ प्रतिग्राहि-संज्ञकानां सग्रामि-नामानि ।

शङ्करः पीतमुण्डी च 'गड़ोपि च दिवाकरः ।
गुड़ो दाड़कनामा च दोकड़िश्चैव पिप्पली ॥ ३० ॥
वन्द्यो मार्त्तण्डनामा च ब्राह्मणी नाम नामतः ।
आयानिश्च गणायिश्च हाड़ो गोपी च वन्द्यजाः ॥ ३१ ॥

---

(१) ख पुस्तके गजो ।

माषो टोकड़िनामा च रायो च मधुसूदनः।
कुशिको यवनामा च हड़ो नारायणोऽपि च ॥ ३२ ॥
महिन्ता दिविधो नाम दायारिश्चैव केशवः।
चट्टः शकुनिनामा च तैलवाटीनैयारिकः ॥ ३३ ॥
कुन्दो विश्वेश्वरो नाम वन्द्यजो [1]विठुसंज्ञकः।
घोषजौ भ्रातरावेतौ मदनविश्वरूपकौ[2] ॥ ३४ ॥
गाङ्गुलिर्हास्यनामा च पूतिर्गौतमसंज्ञकः।
पराशराख्यः शिस्तो च शङ्करो डिण्डिसंज्ञकः ॥ ३५ ॥
अमी विप्रकुलोद्भूता गोदानं जगृहुर्द्विजाः।
तेषां सम्बन्धमात्रेण पङ्के गौरिव सीदति ॥ ३६ ॥
सम्बन्धे भोजने चैव दाने यज्ञे तथैव च।
विद्वद्भिः श्राद्धकाले च वर्ज्ज्या एते पुनः पुनः ॥ ३७ ॥

इति प्रतिग्राहिणां नामादयः ॥

---

## अथ प्रतिग्राहिसुतानां विवाहकथनम्।

गणकन्या वशिष्ठेन टोटेन शकुनेः सुता।
हाड़कन्या दायिकेन कुवेरो हास्यजापतिः ॥ ३८ ॥
चक्रपाणिनापि कन्या गृहीता धनलोभतः।

---

(१) क पुस्तके विध।
(२) ख, भ्रातरौ ज्ञेयौ मदनो विश्वरूपकः।

विठुसुतापतिर्भूत्वा चट्टजः कुलभूषणः ।
प्रतिग्राहिसुतोद्वाहात् षडेते वंशजाः स्मृताः ॥ ३९ ॥
श्रोत्रियाय सुतां दत्त्वा कुलीनो वंशजः पुनः ॥ ४० ॥
ग्रामं लब्ध्वा च वल्लालात् कौण्डिल्यस्तत्रचारितः ।
यवग्रामी कड्डारी च कौण्डिल्यो वैदुड़ीस्तथा ॥ ४१ ॥

इति प्रतिग्राहिसुतानां विवाहकथनम् ॥

---

## अथ पञ्चगोत्रीयानां सग्रामि-नामादि-कथनम् ।

## अथ शाण्डिल्यगोत्रस्य भट्टनारायणस्य वंशधराणां गाँइनामानि ।

आदौ वन्द्यो वराहः स्यात् रामो गड़गड़िस्तथा ।
नृपः स्यात् केशरश्चैव नानः कुसुमकौलिकः ॥ ४२ ॥
वाटुः स्यात् पारिहालोसौ कुलभिर्गुड़नामकः ।
गणो घोषलितां प्राप्तः सेयुः शाण्डेश्वरीस्तथा ॥ ४३ ॥
वुडोमाश्वरकश्चैव, वटव्यालो विकर्त्तनः ।
वसुरायिस्तथा नीलः कद्यालो मधुसूदनः ॥ ४४ ॥
कुशो च कोयनामा च कुलिसा चैव वासुकः ।
आकाशो माधवो दीर्घग्रामी चैव महामतिः ॥ ४५ ॥
एते षोड़श शाण्डिल्याः कथिता राजपूजिताः ।
ततः काश्यप-गोत्रीय-दक्ष-वंशश्च कथ्यते ॥ ४६ ॥

---

## अथ काश्यपगोत्रस्य दक्षस्य वंशधराणां गाँइ-नामानि ।

धीरोऽभवत् गुड़ीग्रामी नीरः स्यादामरूलिकः ।
भूरिष्टालः शुभश्चैव शम्भुः स्यात्तैलवाटिकः ॥ ४७ ॥
कौतुकः पीतमुण्डी स्यात् चट्टग्रामो सुलोचनः ।
पलशायी पालुनामा हड़ःकाको मतस्तथा ॥ ४८ ॥
पोड़ारिः कृष्णसंज्ञोऽसौ पालधी रामनामकः ।
जननामा कोयारिः स्यात् पर्क्कटिर्वनमालिकः ॥ ४९ ॥
सिमलायी श्रीहरिः स्यात् जटः पूषलिकस्तथा ।
भट्टग्रामी शशिधरो मूलग्रामी च केशवः ।
एते षोड़श भूदेवाः ज्ञेयाः काश्यपसंज्ञकाः ॥ ५० ॥

---

## अथ भरद्वाजगोत्रस्य श्रीहर्षस्य वंशधराणाम् गाँइनामानि ।

धाँदुनामा मुखैटिः स्यात् जमः स्याद्दीनसायिकः ।
नानः साहरिको ज्ञेयो रायो च रामनामकः ॥ ५१ ॥
श्रीहर्षस्य सुता एते भरद्वाजकुलोद्भवाः ।
सर्व्वदेशेषु विदितमग्रवर्णचतुष्टयम् ॥ ५२ ॥

---

## अथ सावर्णगोत्रस्य वेदगर्भस्य वंशधराणां गाँइनामानि।

गाङ्गुली हलनामा च कुन्दो राज्यधरस्तथा।
वशिष्ठः सिङ्गलो ज्ञेयो दायी च मदनो भवत्॥ ५३॥
विश्वरूपस्तथा नन्दी वालिग्रामी कुमारकः।
योगी सियारिको ज्ञेयः पुंसिको रामनामकः॥ ५४॥
दक्षः साकटसंज्ञो ऽसौ पारी च मधुसूदनः।
घण्टाग्रामी माधवश्च नायारी च गुणाकरः।
एते पुत्रा महाप्राज्ञाः सावर्णा द्वादश स्मृताः॥ ५५॥

---

## अथ वात्स्यगोत्रस्य छान्दड़स्य वंशधराणां गाँइनामानि।

रविर्महिन्ता सुरभिश्च घोषः
कविः पृथिव्यां खलु शिम्बलालः।
महायशा वापुलिकश्च पिप्ली[1]
धीरश्च पूतिर्ननु शङ्कराख्यः॥ ५६॥
विश्वम्भरोऽभूत् खलु पूर्व्वग्रामी
वात्स्याश्च तादर्थनिवासदेशाः

---

(१) क, वापुलिपिप्पली च।

श्रीश्रीधरोभूत् खलु काञ्जिविल्ली
नारायणो नाम च काञ्जियारी ।
चौत्खण्डिको नाम गुणाकरः स्यात् ।
मनो दीघालो भुवि रुद्रतुल्यः ॥ ५७ ॥

---

## अथ गौणकुलीनानामुल्लेखनम् ।

दीर्घाङ्गी पारिः कुलभी पोड़ारी राढ़ः केशरी ।
घण्टा डिण्डिः पीतमुण्डी महिन्ता गुड़पिप्पली ।
हड़श्च गड़गड़िश्चैव इमे गौणाः प्रकीर्त्तिताः ।
अतःपरं विशेषं यदत्रैव वर्ण्यते मया ॥ ५८ ॥

---

एकदा राजवल्लालः कौलिन्य-स्थापनाय च[1] ।
आमन्त्रयामास विप्रान् सभारोहण[2]-कर्म्मणि ॥ ५९ ॥
नित्यकर्म्माणि निष्पाद्य ततस्तन्निश्चितेऽहनि ।
आययुर्ब्राह्मणाः सर्व्वे सभायां नृपसन्निधौ ॥ ६० ॥
केचित् प्रहरमध्ये च सार्द्धप्रहरमध्यतः ।
सार्द्धद्विप्रहरे के वा ययुर्नृपति-सन्निधिम् ॥ ६१ ॥

---

(१) ख, वल्लालसेनः कौलिन्यादिप्रदत्तये ।
(२) ख, शुभागमन ० ।

ततस्तु मतिमान् राजा विविच्य द्विज-चेष्टितान्[1] ।
कौलीन्यादियथायोग्यं तेभ्यस्तत्र ददौ मुदा[2] ॥ ६२ ॥
सार्द्धद्विप्रहरातीते सभायामागतास्तु ये ।
ते सम्पूर्ण-धर्म्म-निष्ठाः कौलीन्यं लेभिरे द्विजाः ॥ ६३ ॥
ये सार्द्धप्रहरे प्राप्ताः श्रोत्रियास्ते प्रकीर्त्तिताः ।
बभूवुर्गौणकुलीनास्ते, यामान्तरगतास्तु ये ॥ ६४ ॥
कालेनादिश्रोत्रियेषु विशुद्धेषु निवेशिताः ।
आसन् गौणाश्च विख्याताः कष्टश्रोत्रियसंज्ञया ॥ ६५ ॥
यथा गौणास्तथा कष्टा ज्ञेया एव समं सदा ।
इति राढ़ीयविप्राणां कथितः कुलनिश्चयः ॥ ६६ ॥

इति राढ़ीयविप्राणाम् कौलीन्यादिप्राप्तिकथनम् ।

---

## अथ वरेन्द्रवंशकथनम् ।

काश्यपेऽष्टादश ज्ञेयाः शाण्डिल्येषु चतुर्द्दश ।
चतुर्व्विंशतिर्वात्स्यानाम् भरद्वाजे तथाविधः ॥ ६७ ॥
सावर्णे विंशतिर्ज्ञेयाः कथिताः पञ्चगोत्रकाः ।
तेषां ग्रामो सविस्तारं कथ्यते च यथाक्रमम् ॥ ६८ ॥

---

(१) ख, कर्म्माल्पकर्म्मणी तेषां कर्म्मात्यल्पं विविच्य च ।
(२) ख, क्रमात् तैः प्रत्यपादयत् ।

## अथ काश्यपगोत्रस्य कृपानिधेर्वंशधराणाम् गाँइनामानि ।

करञ्जो भादुड़ी मैत्रो ब्रालयष्टिककेरलौ ।
मधुग्रामी वलीहारी मोयाली वीजकुञ्जक: ॥ ६८ ॥
कोटि: सर्व्वग्रामकोटि: परेग्रश्चैव धोसक: ।
भद्रग्रामी चाम्रुकोटि: शरग्रामी च विश्रुत: ।
वेलग्रामी चमग्रामी वंशजाश्च कृपानिधे: ॥ ७० ॥

---

## अथ शाण्डिल्यगोत्रस्य दामोदरस्य वंशधराणां गाँइनामानि ।

रुद्रवाग्ची साधुवाग्ची लाहिड़ी चम्पटिस्तथा ।
नन्दनावाटी कालिन्दी चट्टग्रामी च पूषण: ॥ ७१ ॥
शिहरिर्विंशी मत्स्याशी वेलुड़ीश्चम्पसंज्ञक: ।
सुवर्णतोट:[१] शाण्डिल्योदामोदरस्य वंशजा: ॥ ७२ ॥

---

## अथ वात्स्यगोत्रस्य धराधरस्य वंशधराणां गाँइनामानि ।

संयामिनो भीमकाली भट्टशाली च कुड़मुड़ि: ॥ ७३ ॥

---

(१) ख सुवर्णकोट।

भाड़ियालः कामकाली वात्स्यग्रामी च लच्चकः।
वोड़ग्रामी जामरूखी कालीग्रामी कलीहरः ॥ ७४ ॥
शीतली घोसली चैव तालुड़ी कुक्कुटी तथा।
निद्राली चात्तुषग्रामी देउलि सिहरी तथा ॥ ७५ ॥
शौण्ड्रीकाच्चिः श्रुतवटी चतुरान्दी तथा स्मृतः।
कालिन्दी वात्स्यगोत्रस्य घराधरस्य वंशजाः ॥ ७६ ॥

---

## अथ भरद्वाजगोत्रस्य गौतमस्य वंशधराणां गाँइनामानि।

भादड़ी लाड्डेल-झामा झामाली झम्पटी च वा।
उत्तिवाही उग्ररेखी आखु-रत्नावली खनिः ॥ ७७ ॥
गोस्वाशिराथः पिस्वीनि चेङ्गा चाखुरि पिप्पली।
विशाला काञ्चनग्रामी अस्तक् शाकोटकस्तथा ॥ ७८ ॥
छेत्रग्रामी राजग्रामी नन्दीग्रामी च जध्यलः।
पुन्तिर्वृहती गोत्रेषु भरद्वाजेषु गोतमात् ॥ ७९ ॥

---

## अथ सावर्णगोत्रस्य पराशरस्य वंशधराणां गाँइनामानि।

सिंहडालक उन्दुड़ी शृङ्गी पाकड़ी लेधुड़ी।
धुन्धुड़ी तातोया सेतुः कपाली लोमपेटरी ॥ ८० ॥

पञ्चवटी खण्डवटी निकड़िश्च समुद्रकः।
पुण्डरिको यशोग्रामो केतुग्रामो च विश्रुतः॥ ८१ ॥
पुष्पपो भादुषो चैव वरेन्द्रा गाँइसंज्ञकाः।
मुनिकल्पा श्रमी जाता सावर्णेषु पराशरात्॥ ८२ ॥

---

## अथ वैदिकानां कौलिन्यादिविहीनत्वकारणम्।(१)

वैदिका ब्राह्मणा आसन् वणिजां पक्षपातिणः।
ततस्तान् सदसि क्रोधान्नाजुहाव महीपतिः॥ ८३ ॥
नाकाङ्क्षन्नभिहारं ते राजदत्तं तपोधनाः।
ब्राह्मणाः ब्रह्मविद्वांसो वैदिका इति केचन॥ ८४ ॥

इति वैदिकानां कौलीन्यादिराहित्यकथनम्।

---

## अथ कान्यकुब्जागत-कायस्थानां नामगोत्राणि।

काश्यपे गोत्रे सञ्जातो दक्षनामा महामतिः।
तस्य दासो गौतमस्य गोत्रे दशरथो वसुः॥ ८५ ॥
शाण्डिल्यगोत्रे सम्भूतो भट्टनारायणः कृती।
तस्य सौकालिनो दासो घोषजो मकरन्दकः॥ ८६ ॥
भरद्वाजेषु विख्यातः श्रीहर्षो मुनिसत्तमः।
दासस्तस्य विराटाख्यः गुहकः काश्यपः स्मृतः॥ ८७ ॥

---

(१) ख पुस्तके एतदधिकरणं नास्ति।

सावर्णगोत्रो निर्द्दिष्टो वेदगर्भस्तपोधनः।
तस्य दासो मित्रवंशो विश्वामित्रस्य गोत्रकः॥
कालिदास इति ख्यातः शूद्रवंशसमुद्भवः॥ ८८॥
वात्स्यगोत्रेषु सम्भूतः छान्दड़ इति संज्ञितः।
मौद्गल्यगोत्रकोदत्तः पुरुषोत्तमसंज्ञकः।
एतेषां रक्षणार्थाय स्वागतो गौड़मण्डलम्॥ ८९॥
ये घोषवसुमित्रास्तु कुलीनाः[१] सर्व्वे एव ते।
देव-दत्तौ सेनसिंघौ पालितश्च करो गुहः।
दासश्च मध्यमा अष्टौ द्विसप्ततिर्घरास्ततः॥ ९०॥
अशीति मौलिका राजवल्लालसेन-सम्मताः।
द्विसप्ततिर्घरा ये ते कायस्थेष्वधमाः स्मृताः॥ ९१॥

---

## अथ गुणवत्कायस्थप्रशंसा।

शूद्रास्तु ये दानपरा भवन्ति
व्रतान्विता विप्रपरायणाश्च।
अन्नं हि तेषां सततं सुभोज्यं
भवेत् द्विजैर्दृष्टमिदं पुरातनैः॥ ९२॥

इत्यानन्दभट्टप्रोक्ते[२] वल्लालचरिते पूर्व्वखण्डं सम्पूर्णम्॥

---

(१) ख पुस्तके स्वागतम्।
(२) ख इति श्रीमदानन्द॰।

# वल्लालचरितम्

## उत्तरखण्डम्

### अथ प्रथमोऽध्यायः ।(१)

वल्लालचरितं पूर्व्वखण्डीयं कथितं मया ।
श्रूयतामुत्तरे खण्डे विस्तरात् कथ्यतेऽधुना ॥ १ ॥
सेनवंशधरो राजा वल्लालो नाम विश्रुतः ।
पुरेमामभुनक् पृथ्वीं प्रभावाच्चतशासनः ॥ २ ॥
प्रभुश्च यौवनस्थोऽपि तस्मिन्नासीद्विवेकता ।
नाहारि ब्राह्मणी कन्या कदाचिदपि भुभृता ॥ ३ ॥
कामाचारोऽपि दृप्तोऽपि स प्रियङ्करकिङ्करः ।
कदाचिन्न परस्त्रीणां जारत्वं नाकरोन्नृपः ॥ ४ ॥
असेवि चाण्डालकन्या राज्ञा द्वादशवार्षिकी ।
नटीकन्या च सिद्धार्थं पाषण्डमतवर्त्तिना ॥ ५ ॥
यावन्नासीत् भट्टपादैरुपदिष्टो महीपतिः ।
तावत् स कृतवान् कर्म्म तत्तत् सज्जनगर्हितम् ॥ ६ ॥

---

(१) क पुस्तके नास्ति ।

भट्टानुव्रतिना तेन ततो विमलबुद्धिना।
किं किं नानुष्ठितं कर्म्म ब्राह्मणानां प्रियङ्करम् ॥ ७ ॥
वङ्गवागड़िवारेन्द्रराढ़ाभूर्मिथिलापि च।
तस्यासीद्विपुलं राष्ट्रमेतद्विषयपञ्चकम् ॥ ८ ॥
[1]वसतिस्म नृपः श्रीमान् पुरा गौड़े पुरोत्तमे।
कदाचिद्वा यथाकामं नगरे विक्रमे पुरे॥ ९ ॥
स्वर्णग्रामे कदाचिद्वा प्रासादे सुमनोहरे।
रममानः सह स्त्रीभिर्दिवीव त्रिदिवेश्वरः ॥ १० ॥
वैहारिकासु विद्यासु वाजिपृष्ठे च पण्डितः।
शस्त्रास्त्रेषु परं दक्षो दाने कर्ण इवापरः ॥ ११ ॥[2]

[3]इत्यानन्दभट्टप्रोक्ते वल्लालचरिते वल्लालपरिचयो
नाम प्रथमोऽध्यायः।

---

(१) ख पुस्तके अधिकोऽयं स्लोको दृश्यते
भट्टसिंहगिरिर्यस्य महाराजगुरुर्गुरुः।
समर्थः स महातेजाः त्रैलोक्यमपि शासितुम् ॥
(२) ख पुस्तके स्लोकोऽयमधिको दृश्यते
स राजपुङ्गवो धन्यं वार्द्धक्ये दानसागरम्।
अनिरुद्धोपदेशेन प्रणिनाय श्रुतं मया ॥
(३) ख इति श्रीमदानन्द० उत्तरखण्डे० गुणकीर्त्तणम्।

## अथ द्वितीयोऽध्यायः[1] ।

पुरोदन्तपुराधीशं जिगीषुरवनीपतिः ।
वित्ताढ्याद्दल्लभानन्दान्निष्ककोटिं गृहीतवान् ॥ १ ॥
वारं वारं जितो राजा यतो मणि[2]पुराहवे ।
ततोऽभियानं घोरं स कर्त्तुमासीत्समुद्यतः ॥ २ ॥
वल्लभेऽदातुकामेऽपि दृष्ट्वा संविद्व्यतिक्रमम्[3] ।
प्रेषयामास दूतं स वणिजाय महात्मने ॥ ३ ॥
स दूतः सङ्कोटस्थं वल्लभं समुपागतः ।
विज्ञापयामास तदा वल्लालनृपशासनम् ॥ ४ ॥

वल्लाल उवाच ।

यथास्माभि र्हि कर्त्तव्यं संयानं प्रति कीकटम् ।
विधाय सुमहोद्योगं षड़ङ्गबलसंयुतैः ॥ ५ ॥
ततो वल्लभचन्द्रः स गृह्णन् प्राणित्यलेखनम् ।
प्रेषयन् तु सार्द्धकोटिं सुवर्णमिति माचिरम् ॥ ६ ॥

वल्लभ उवाच ।

अमितव्ययिना राज्ञा कालिका पातिता सकृत् ।
किं ब्रूमो नृपतिं नैवं मया दृष्टः सतां विधिः ॥ ७ ॥

---

(१) क, पुस्तके नास्ति ।

(२) ख, फणि ० ।

(३) ख, वल्लभेऽसम्मते दातुं पुनः सम्बिद्व्यतिक्रमात् ।

कस्माद्वा समरोद्योगः लब्धस्य परिपालनम् ।
राष्ट्रस्यैवोचितं कर्त्तुं युद्धमेतदकारणम् ॥ ८ ॥
त्यज्यताम् यँावारबुद्धिः प्रजानां हितकाम्यया ।
प्रजाक्षयकरं युद्धमधर्म्मंश्च निरयप्रदम् ॥ ९ ॥
यदृच्छाचारी नृपतौ राजधर्म्मं न पश्यति[1] ।
अरक्षणे महद्दोषः किं गुणो राष्ट्रवर्द्धनैः ॥ ॥ १० ॥
चेत्रियं भगवद्भक्तमथवा मुषलं धनुः ।
न कोऽपि पुरुषः कर्त्तुं कदाचिद्भवति प्रभुः ॥ ११ ॥
अरक्षित्वा प्रजा राजा केवलं वलिमाददत् ।
अयशो महदाप्नोति निरयञ्चैव गच्छति[2] ॥ १२ ॥
इत्याहुः कौशातकिनः किं राजनयचर्च्चया ।
राजनीति र्हि विज्ञेयं शत्रूणां परिमर्द्दनम् ॥ १३ ॥
अथवा विग्रहैर्यस्मात् पीड्यन्तेऽस्मद्विधा जनाः ।
उलपा इव सामान्या ब्रवीमि तेन हेतुना ॥ १४ ॥
यदि स्यान्नृपति र्द्द्यात् करादानसमन्वितम् ।
आधिक्ये हरिकेलीयं ऋणं दातुं तदोत्सहे ॥ १५ ॥
तस्य तद्भाषितं सर्व्वं स दूतः शान्तवाहनः ।
विक्रमं पुरमागत्य वल्लालाय न्यवेदयत् ॥ १६ ॥

---

(१) क, यदृच्छा हि भवेत्तस्य राजधर्म्ममवेक्षता ।
(२) क, निरयञ्च प्रगच्छति ।

एतच्छ्रुत्वाथ सन्देशं बल्लालः पृथिवीपतिः ।
मन्युना स प्रजज्वाल कुटङ्गो बह्निना यथा ॥ १७ ॥
तदास्य कोपताम्रास्यात्[1] सुस्राव स्वेदशम्बरम् ।
अग्निसंयोगतः स्विन्नदह्यमानेन्धनाद् यथा ॥ १८ ॥
बल्लभे जातसंरोषो निर्दोषेषु वणिक्ष्वपि ।
क्रुद्धो भूत्वा स बल्लालः चकार कदनं भृशम् ॥ १९ ॥
शुल्कादानमिषेणापि जहार वणिजां बलात् ।
व्यवहारे धृतं वस्तु केषाञ्चित् क्रोशतामपि ॥ २० ॥
असवर्णाविवाहस्तु निषिद्धोपि कलौ युगे ।
गोविन्दाढ्यस्य कन्यां स जहार वणिजो बलात् ॥ २१ ॥
नहर्देवोऽपि सौवर्णादनुदर्शं चकार ह ।
कुलवृद्धैः सहागत्य नापि प्रत्यग्रहीच्च तम् ॥ २२ ॥
ततः[2] स मन्त्रयन् राजा गूढ़ं चाटुविटैः सह ।
पीडयामास वणिजो दूतञ्चेदमुवाच ह ॥ २२ ॥

बल्लाल उवाच ।

सुवर्णा वणिजो राष्ट्रे दुःशीला धनगर्व्विताः ।
ब्राह्मणान् ते तूलयन्ति ब्रह्मचत्वञ्च मामपि[3] ॥ २३ ॥

---

(१) ख, क्रोध० ।
(२) ख, एवं ।
(३) ख, ब्रह्मक्षत्रियजञ्च माम् ।

वल्लभानन्दनामा च[1] वणिग्गणमहत्तरः ।
अशिष्टः कुलजम्मन्यो दाम्भिकस्य विशेषतः ॥ २४ ॥
इत्यादीन् सुबहून् दोषानारोप्य [2]पण्यजीविषु ।
वल्लभाय सङ्कोटे राजा दूतं व्यसर्ज्जयत् ॥ २५ ॥
आसेधं विपुलं चक्रे भयं मैत्रं च दर्शयन् ।
येन केन प्रकारेण तं वशीकरणेच्छया ॥ २६ ॥
तदाददे[3] द्विगुणितमन्यायेन करं भरम् ।
[4]माद्दादावाहरच्छुल्कमसकृच्छौल्किकच्छलात् ॥ २७ ॥

[5]इत्यानन्दभट्टप्रोक्ते वल्लालचरिते [6]वणिगाधर्षणं नाम
द्वितीयोऽध्यायः ।

---

(१) ख, वल्लभानन्दचन्द्रः स ।
(२) क, पण्यजीविषु ।
(३) ख, जह्रुः ।
(४) ख, षट्टादावाहरत् शुल्कं राज्ञोमाण्डविकाच्छलात् ।
(५) ख, इति श्रीमदानन्द ० ।
(६) ख, उत्तरखण्डे ।

## अथ तृतीयोऽध्यायः[1]।

एकदारुह्य जवनमश्वं राजा यदृच्छया ।
प्रययौ धवलेश्वर्य्यास्तीरं रुचिरकाननम् ॥ १ ॥

उपकूलेषु रम्येषु वनेषु सैकतेषु च ।
भ्रममाणो ददर्शासौ नदीतीरविचारिणीम् ॥ २ ॥

वर्त्तुलौ स्फुटकैशोरौ दृढ़ाववरलौ कुचौ ।
लज्जया[2] वसनान्तेन छादयन्तीं सुलोचनाम् ॥ ३ ॥

सुकेशां शुद्धदशनां बालां सरसिजाननाम् ।
तन्वङ्गीं सुकोमलाङ्गीं सुनासां मृदुहासिनीम् ॥ ४ ॥

बृहन्नितम्बविम्बाढ्यां सुकपोलां मनोहराम् ।
सहितामेकया सख्या स्थलजामिव पद्मिनीम् ॥ ५ ॥

तस्याः परमकामिन्याः ललिताद्वदनाम्बुजात् ।
अपिवल्लावण्यरसं राज्ञो नयनषट्पदः ॥ ६ ॥

उन्मादनकटाक्षेण[3] विविद्धाङ्गो महीपतिः ।
तां विलोक्य ययौ तूर्णं मन्मथस्य[4] विधेयताम् ॥ ७ ॥

---

(१) कपुस्तके नास्ति।

(२) ख, त्रपया।

(३) क, तद्दृष्ट्योन्मादमेनेव।

(४) ख, राजा कन्दर्पस्य।

उपप्रयाय सुश्रोणिं स तां पद्मनिभेक्षणाम्।
पश्यन्नेव निर्निमेषं तिष्ठन्तीं[1] वाक्यमब्रवीत्॥ ८॥

राजोवाच।

नेत्रेण नीलकमलं कमलं मुखेन
कुन्देन दन्तमधरेण सुपक्वबिम्बम्।
गात्रेण चम्पकदलं[2] परिभूय भासि
का त्वं सरित्तटवने वनदेवतेव॥ ९॥

सामन्त[3]सङ्घपरिसेवितपादपद्मो
वैधव्यकारणविधिः परसुन्दरीणाम्।
वल्लालसेननृपतिस्तव कुन्ददन्ति
यातो विधेयविषयः कुरु नेत्रपातम्॥ १०॥

तच्छ्रुत्वा जातरागा सा भावमाविष्कृती तदा।
किञ्चिदवाङ्मुखी प्राह नृपतिं मृदुसुस्वना॥ ११॥

कन्योवाच।

आचक्ष्व मैवमवनीश्वर मां कुमारीम्।
वंशः क्व ते विधुभवः क्व च सम्भवो मे॥ १२॥
चर्म्मारकोरितनया विदितास्मि लोके।
नाहं त्वया ह्यकुलजा[4] परिणेतुमर्हा॥ १३॥

---

(१) ख, तन्मुखम्।

(२) खपुस्तके, चम्पकुसुमम्।

(३) ख, राजन्य०।

(४) ख, जानीहि नास्मि भवता।

राजोवाच ।

किं व्यामोहयसे बाले कोरिकन्येतिवादिनी ।
चर्म्मार्य्यां ईदृशं रूपं किं स्यात् भुवनमोहनम् ॥ १४ ॥
चर्म्मारस्य नासि कन्या पालकः स तु केवलम् ।
राजकन्यासि भद्रे त्वं ध्रुवमेव न संशयः[1] ॥ १५ ॥
को वा कापुरुषो लोके भवेदीदृक् वरानने ।
यस्त्वां निधिमिव प्राप्यामूल्यं करगतं त्यजेत् ॥ १६ ॥
[2]कुलजाकुलजा वासि त्वमेव हृदयप्रिया ।
आयाहि त्वं मया सार्द्धं त्वां नयामि निजं पुरम् ॥ १७ ॥
तच्छ्रुत्वा वचनं तस्य राज्ञः साचीकृतेक्षणा ।
सा सखीं नोदयामास वक्तुं तत्रोचितं तदा ॥ १८ ॥

सख्युवाच ।

यद्यस्याः पाणिं विधिना ग्रहीतुं कृतनिश्चयः ।
तदेनां नय ते सार्द्धमेषात्मानं ददाति ते ॥ १९ ॥

राजोवाच ।

गान्धर्व्वेण विधानेन इयं प्राप्ता स्वयंवरा ।
पतित्वेन भवाम्यस्या इयं मे जीवितेश्वरी ॥ २० ॥

---

(१) ख, तत्र मे नास्ति संशयः ।

(२) कपुस्तके कुलजाकुलजेत्यादि २४पत्रस्यराजोवाचेत्यन्तस्य सन्दर्भस्य स्थाने यमेकः श्लोको दृश्यते ।

अस्तं याति दिवानाथः सायं संप्रति वर्त्तते ।
आयाहि त्वं मया सार्द्धं त्वां नयामि निजं पुरम् ॥

इत्युक्त्वा कौरिकन्यां स पुनरेव जगाद ताम् ।
सुमुखीं परमानन्दसन्दोहविकचाननः ॥ २१ ॥

राजोवाच ।

चल मम साकं भव मम भार्य्या स्वारोहेदं वरयानम् ।
अवरोधे स्वामिनी च भव मम चैवान्तःपुराणाम् ॥ २२ ॥
इत्युक्त्वा स्मयमानस्तां वेपमानां समग्रहीत् ।
ससखीं याप्य यानेन निनाय विक्रमं पुरम्[1] ॥ २३ ॥
ततस्तामनवद्याङ्गीं स्वस्य गेहे न्यवेशयन्
बुभुजे कामतो राजा राजकृत्ये हृतादरः ॥ २४ ॥
अत्यन्तं लालिता सातु[2] राज्ञा चर्म्मारदारिका ।
सिषेवेऽवरोधमध्ये चलच्चामरमारुतम् ॥ २५ ॥
शुद्धान्तगतया सार्द्धं विहरन् स तया सुखम् ।
नृपतिर्बुबुधे नैव कालातिक्रमणं महत् ॥ २६ ॥

इत्यानन्द[3]भट्टप्रोक्ते वल्लालचरिते[4] सुन्दरीसमागमो
नाम तृतीयोऽध्यायः ।

---

(१) ख, च पुरं निजं ।
(२) ख, तेन ।
(३) ख, इति श्रीमदानन्द ० ।
(४) ख, उत्तरखण्डे स्त्रीलाभो नाम ।

## चतुर्थोऽध्यायः[1] ।

ततः कालेन कियता क्रीडारत्नसमुत्सुकः ।
एकदान्तःपुरं राजा विवेश[2] रजनीमुखे ॥ १ ॥
[1]प्रविश्य शयनागारं दयितां भूमिशायिनीम् ।
ददृशे सुकुमाराङ्गीं कृत्तमूललतामिव ॥ २ ॥
वाससा मुखमाच्छाद्य रुदतीं कमलेक्षणाम् ।
अदुःखार्हां प्रियतरामात्मनो जीवितादपि ॥ ३ ॥
तां दृष्ट्वा मलिनाकारां लुठन्तीं धरणीतले ।
जुघूर्ण मस्तकं तस्य नेत्राभ्यां ददृशे तमः ॥ ४ ॥
विस्मयानो नरपतिस्तस्या नयनजं जलं ।
परिमृज्याकुलीभूतः सभयं वाक्यमब्रवीत् ॥ ५ ॥

राजोवाच ।

किन्विदं मृगशावाक्षि नेत्राभ्यां स्रवते जलम् ।
अवाङ्मुखी किमर्थं त्वं भूमावेव विलुण्ठसे ॥ ६ ॥
नत्वहं विप्रियं किञ्चिदकार्षं तव भामिनि ।
क्रन्दनेन दुःखयसे कथं मां तनुमध्यमे ॥ ७ ॥
कथं कौसुम्भवसनं सौवर्णम्वा शुचिस्मिते ।
नानुगृह्णासि सुश्रोणि मणिवीजपयोधरे ॥ ८ ॥

---

(१) आदर्शपुस्तकयोर्नास्ति ।

(२) ख, रजन्यां प्रविवेश ह ।

धम्मिल्लरचना सुभ्रु मल्लीदाम्ना सुगन्धिना।
कुचयोश्चन्द्रलेखेव, पत्राङ्का च न कारिता ॥ ९ ॥
पुरानितम्बसंसर्गात् यत्ते सारसनोत्तमम्।
शोभितं नाधुना भूमौ पतितं तद्विराजते ॥ १० ॥
मुक्तावली भ्राजते न च्युता तव कुचद्वयात्।
ग्रैवेयकं च्युतं कण्ठादनाभरणतां गतम् ॥ ११ ॥
पूर्णिमाकौमुदीकान्तिनिर्ज्जितस्मितशोभिना।
किं नो वदसि वक्त्रेन कुशेशयसुगन्धिना ॥ १२ ॥
सर्व्वथाम्बुजपत्राक्षि तवास्मि वचनङ्करः।
प्रतीक्षन्ते तवादेशं मज्जनाश्च सदा प्रिये ॥ १३ ॥
कथं नादिशसे प्राग्वत् स्मितपूर्व्वाभिभाषिणि।
प्रपन्नं प्रपदे प्राप्तं दासं हिमकरानने ॥ १४ ॥
त्वत्तः प्रियतरा नान्या वर्त्तते मम सुन्दरि।
त्वं हि मे जीवनं प्राणाः त्वं हि मे परमा गतिः ॥ १५ ॥
श्रवणामृतवाक्येन मां जीवय सुहासिनि।
कायस्थञ्चाप्यकायस्थं स्फुरन्तमपि मां मृतम् ॥ १६ ॥
दास्ये प्रत्ययकारिण्याः कोटिं प्रत्ययकारिणि।
रत्नालङ्कारभारं वा यत्ते मनसि वर्त्तते ॥ १७ ॥
अप्यहं लक्ष्मणं[1] जह्याम् त्वत्प्रियार्थं वरानने।
गाहेयं सागरं बाले प्रविशेयम् हुताशनम् ॥ १८ ॥

---

(१) ख, लवणम्।

किमाभीलकारणं ते जीवितेश्वरि कथ्यताम्।
तत्प्रियं प्राकरिष्यामि शपे ते ललिताङ्घ्रिणा॥ १९॥
निरीक्षसे किं न सुभ्रु प्रेष्यं मां तव सुन्दरि।
केनावमानितासि त्वमग्नौ कः शलभायते॥ २०॥
अनाढ्यः को भवेदाढ्यः आढ्यो यायादनाढ्यताम्।
को वद्धो मुच्यतामद्य कोऽवध्यो वा निहन्यताम्॥ २१॥
श्रुत्वैवं भाषितं तस्य कामस्य वशवर्त्तिनः।
साभिमानवती राज्ञः स्थिता नतमुखी तदा[1]॥ २२॥
व्यावृत्तवदनं रामा किञ्चित् साचीकृतेक्षणा।
सकृद्विलोक्य नृपतिं तस्थौ नतमुखी पुनः॥ २३॥
श्वासकम्पदृढोरोजा स्फुरद्बिम्बाधरा ततः।
परिमृज्याञ्चलेनास्रं बभाषे गद्गदस्वना॥ २४॥

पद्माप्युवाच[2]।

यदि ते मत्प्रियं कार्य्यं मां प्रेषय पितुर्गृहम्।
दुःखार्हां दुःखिनीं नाथ काननान्तरचारिणीम्॥ २५॥
भोगिनीं[3] कृपाणां मां मन्नामधेयञ्च विस्मर।
राज्यं भुङ्क्ष्व महाराज मां विहाय सुखं सदा॥ २६॥
प्राप्नोसि सुमहद्दुःखं[4] नृपते मम कारणात्।
देशदेशान्तरे कान्त मद्धेतोस्त्वं कलङ्कभाक्॥ २७॥

---

(१) ख, पुरः।
(२) क, हुन्दय्युवाच।
(३) ख, दासीं ते।
(४) ख, संप्राप्नोसि महद्दुखम्।

राज्ञां वा राजपुत्राणां प्राज्ञानामभिजन्मनाम् ।
पुरा नाज्ञासिषं नाथ प्रकृतिं वनचारिणी ॥ २८ ॥
अद्य लोकचरित्राणां जाताभिज्ञावनीपते ।
जीवेयं यदि पश्येयं तदा किं किं न किल्बिषम् ॥ २९ ॥
धनादौ नहि मे कार्य्यं किमलङ्करणादिना ।
पतित्वा धवलेश्वर्य्यां निमज्जेयमहं ध्रुवम्[1] ॥ ३० ॥
एवं विलपमानां तां वल्लालः क्षौणिपालकः ।
प्रवेशयन् वक्षसीव तां पुनर्वाक्यमब्रवीत् ॥ ३१ ॥

राजोवाच[2] ।

शिरो मे[3] घूर्णते जाये वदनञ्च[4] विशुष्यति ।
किमु तत्कारणं यस्मात् त्वमेवं भृशमाकुला ॥ ३२ ॥
त्वं हि मे जीवनं पत्नि त्वं हि मे परमं तपः ।
त्वमेव मे राजधर्म्मः प्राणानामीश्वरी च मे ॥ ३३ ॥
त्वया हीनं न काङ्क्षेयं काञ्चीशत्व[5]मपि प्रिये ।
त्वया सह विशालाक्षि वने वासो वरं मम ॥ ३४ ॥
प्राणा अपि मया शक्यास्त्यक्तुं न त्वां कदाचन ।
शक्नुयामसितापाङ्गि कलङ्केषु च का कथा ॥ ३५ ॥

---

(१) ख, नदीं गत्वा मरिष्यामि निमज्ज्य जीवितेन किम् ।
(२) ख, पुस्तके नास्ति ।
(३) ख, मस्तकम् ।
(४) ख, मुखं मे च ।
(५) क, ढिल्लीशत्व ।

पादानतं महादेवि किं नानुकम्पसे पतिम् ।
प्राणैर्म्मम शापितासि वद त्रैलोक्यसुन्दरि ॥ ३६ ॥
त्वमेव महिषी राज्ञि भर्त्ताहं ते महागुरुः ।
आचक्ष्व हृद्गतं भावमेषोऽहं विहिताञ्जलिः ॥ ३७ ॥
पतामि त्वत्पदौ मूर्द्धा कस्मान्न दयसे पतिम् ।
भक्तमन्याऽङ्गनासक्तं प्रसीदाम्बुजलोचने ॥ ३८ ॥
एवं तदा व्याहरन्तं राजानमुत्पलेक्षणा ।
उवाच दारुणं वाक्यमुच्छ्वसन्ती मुहुर्मुहुः ॥ ३९ ॥

राज्ञ्युवाच ।

अवक्तव्यमपि स्वामिन् त्वां वदामि शृणु प्रभो ।
आकर्ण्य च प्राणनाथ यत्कर्त्तव्यं तदाचर ॥ ४० ॥
भर्त्ता हि रक्षकः स्त्रीणां युवतीनां विशेषतः ।
भर्त्तारं यदि नो वच्मि कं वदामि सयौवना ॥ ४१ ॥
भर्त्ता गतिर्हि नारीनां भर्त्ता परमदेवता ।
ब्राह्मणस्य मुखात् पित्रालये देव मया श्रुतम् ॥ ४२ ॥
पातिव्रत्यं परो धर्म्मः श्रूयते योषितामिति ।
नाहमत्याचरामि त्वां मनसापि कदाचन ॥ ४३ ॥
नाहं प्राकृतनारीव पतिभक्तिविवर्ज्जिता ।
हृत्पद्मासनमास्थाप्य सदा त्वां पूजयाम्यहम् ॥ ४४ ॥
येनाहं सततं पूज्या प्रणिपातेन भक्तितः ।
तेनाहं नीचवृत्तेन विमार्गेणावमानिता ॥ ४५ ॥

धिक् तं स किल्बिषाचारः कामान्धो व्युत्थितेन्द्रियः[१] ।
मातरं यः कामयते दुरात्मा मां पतिव्रताम् ॥ ४६ ॥
अद्य साहं गता नाथ पायुचालनमन्दिरम् ।
एकाकिनीमसौ दृष्ट्वा स्मयन्ननुससार माम् ॥ ४७ ॥
भीतया यन्मयाहूता सखी तत्र द्रुतं गता ।
ततो दुष्टात्मना नाथ न तेन मलिनीकृता ॥ ४८ ॥
धर्म्मेण रक्षिता साहं[२] त्वाम् वदामि यथायथम् ।
कम्पन्ते मम गात्राणि स्मृत्वा तस्य कुचेष्टितम् ॥ ४९ ॥
भीतास्मि कुत्सिताचारात् तस्मादहमरक्षिता ।
विपत्स्ये निर्णायकेव चमूरायोधनं गता ॥ ५० ॥
इत्युक्त्वा दारुणं वाक्यं क्रूरा वल्लालवल्लभा ।
विररामोत्सृजन्त्यस्रं तदा वल्लभवक्षसि ॥ ५१ ॥
तच्छ्रुत्वा वचनं राजा प्रियास्यकमलच्युतम् ।
कोपेनासौ प्रजज्वाल दावेनेव धराधरः ॥ ५२ ॥
तदा क्रुद्धस्य म्लेच्छास्यसदृशास्यमहीक्षितः ।
स्फुरत् सर्व्वाङ्गस्य नेत्रयुगलं लोहितायते ॥ ५३ ॥
तां वारणवल्लभोरुं वल्लालो वल्लभां ततः ।
पुत्रे दण्डं प्रतिज्ञाय सान्त्वयामास विक्लवाम् ॥ ५४ ॥

---

(१) ख, संकिल्बिषाचारं कामान्धं व्युत्थितेन्द्रियम् ।
(२) क, सेयं ।

पुत्रदुश्चेष्टितं ध्यायन् तल्पे कोपाकुलो नृपः ।
जाग्रदेव यामिनीं तां कथञ्चिदत्यवाहयत् ॥ ५५ ॥

इत्यानन्द[1]भट्टप्रोक्ते वल्लालचरिते[2] दयिताप्रसाधनं नाम
चतुर्थोऽध्यायः ।

---

(१) ख, पुस्तके इति श्रीमदानन्द ० ।
(२) ख, उत्तरखण्डे इत्यधिकं पठति ।

## अथ पञ्चमोऽध्यायः[१]।

उत्थायाहर्म्मुखे राजा क्रोधमाहारयन् भृशम् ।
घातुकानादिशद्धन्तुमुपांशु तनयं प्रियम् ॥ १ ॥
श्रुत्वा स्वस्य बधादेशं तपस्वी लक्ष्मण[२]स्ततः ।
व्याकुलो मन्त्रयामास कान्तया सह निर्ज्जने ॥ २ ॥
रजन्यां गाहमानायामामन्त्र्य रहसि प्रियाम् ।
गुप्तां तरणिमारुह्य पलायत महाभयात् ॥ ३ ॥
प्रभातायां विभावर्य्यां ज्ञात्वा[३] तस्य पलायनम् ।
दुर्गावाड़ीं ययौ राजा चिन्ताजृम्भविलोचनः ॥ ४ ॥
प्रविशन् मन्दिरं तत्र[४] भित्तिकायां महीपतिः ।
स्वस्नुषालिखितं श्लोकं दृष्ट्वेममपठत् स्वयम् ॥ ५ ॥
पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा ।
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥ ६ ॥
श्लोकमेतं वाचयित्वा वल्लालो धरणीपतिः ।
पुत्रस्नेहचलच्चित्तः कैवर्त्तानाजुहाव ह ॥ ७ ॥
तान् प्राप्तानब्रवीद्राजा हंहो नौकर्म्मजीविनः ।
मत्प्रियं यदि कर्त्तव्यं श्रूयतां वचनं मम ॥ ८ ॥

---

(१) कपुस्तके, नास्ति ।

(२) ख, लक्ष्मणम् ।

(३) ख पुस्तके, श्रुत्वा ।

(४) ख, ० वाटीम् ।

इतोऽपक्रान्तस्तनयो लक्ष्मणः[1] क्रोधलक्षणः।
युष्मभ्यमीप्सितं दद्यामन्विष्यानयताञ्जसा ॥ ९ ॥

नाविका ऊचुः।

भूधरे कन्दरे दुर्गे कान्तारे सलिलेश्वरे।
पाताले वानयिष्यामस्तिष्ठन्तमपि माचिरात् ॥ १० ॥
इत्युक्त्वा चाभिवाद्याथ राजानं नाविका मुदा।
आनेतुं लक्ष्मणं[2] जग्मुः कृत्वा कोलाहलं भृशम् ॥ ११ ॥
अरित्राणां द्विसप्तत्या वाहयन्तस्तरीं द्रुतम्।
आनिन्युर्लक्ष्मणं[2] द्वाभ्यामहोभ्यां जालजीविनः ॥ १२ ॥
ततस्तेभ्यो ददौ राजा सन्तोषविमलाननः।
धनरत्नवस्त्रभारान् हालिक्यञ्चोपजीवनम् ॥ १३ ॥

इत्यानन्द[3]भट्टप्रोक्ते वल्लालचरिते लक्ष्मणानयनं[4] नाम पञ्चमोऽध्यायः।

---

(१) ख, लवणः।
(२) ख, लवणम्।
(३) ख, इति श्रीमदानन्द०।
(४) ख, उत्तरखण्डे लवणसेन०।

## अथ षष्ठोऽध्यायः[1] ।

अथास्ति शैवैः सकलैश्च शाक्तैः
सौरैस्तथा वैष्णवगाणपत्यैः ।
उपासिकोपासकदण्डिभिश्च
वन्द्यः सदा भिक्षुकभिक्षुणीभिः ॥
विप्रैश्च क्षत्रैः वणिजैश्च शूद्रैः
सन्न्यासिभि र्मानुषमानुषीभिः ।
सर्व्वैश्च पूज्यो वरदः प्रसिद्ध
उ माधवोग्रः किल देवदेवः ॥ २ ॥

अथानादिमहालिङ्गं पूर्व्वस्मिन् गौड़मण्डले ।
गताः स्म पूजितुं देवं मानवा उग्रमाधवम् ॥ ३ ॥
ब्राह्मणाः क्षत्रियाः सर्व्वे[2] वैश्याश्च मनुजादयः ।
सत्शूद्राद्याश्च शूद्राश्च महास्थानमुपागताः ॥ ४ ॥
केचित् पुष्पाणि संगृह्य धूपदीपानथापरे ।
केचित् गन्धञ्च नैवेद्यान् केचित् व्यजनचामरान् ॥ ५ ॥
केचिच्छत्राणि रत्नानि दामञ्च वसनानि च ।
इत्यादीनि समागृह्य ते द्रव्याणि समागताः ॥ ६ ॥
षड़ार्त्तवैः प्रसूनैश्च करवीरादिभिर्जनाः ।
स्वभुवं पूजयामासु र्धूपैश्च चन्दनादिभिः ॥ ७ ॥

---

(१) क, पुस्तके नास्ति । (२) ख, शैव ।

वारिभिस्तीर्थजैः स्वच्छैः कुङ्कुमैः सह रञ्जितैः।
शङ्करं स्नापयामासुः शीतलैश्च सुगन्धिभिः॥ ८॥
ददु र्घृतप्रदीपान् च तैलदीपानथापरे।
क्षीरार्घञ्च ददुस्तत्र पाद्यञ्चामलवारिभिः॥ ९॥
गोपायसै र्गोघृतैश्च मधुकुङ्कुमकर्पूरैः।
पञ्चामृतैः केशरैश्च गुड़ैश्च शर्करैरपि॥ १०॥
चन्दनैश्च सुगन्धैश्च पञ्चगन्धै र्मुदापरे।
शङ्करं लेपयामासु र्मानवा भक्तितत्पराः॥ ११॥
शाल्यन्नमोदनैर्युक्तं परमान्नं ददु र्मुदा।
लड्डुकाञ्च पिष्टकाञ्च नैवेद्यान् विविधानपि॥ १२॥
पताकान् स्थापयामासुश्चलच्चीनांशुकान् तथा।
ननृतुश्च जगुः केचित् केचित् घण्टामवीवदन्॥ १३॥
सुवर्णं रजतं ताम्रं ददुः केचित् स्वयम्भुवे।
ददुश्च पञ्चरत्नानि सह लाजाक्षतै र्नराः॥ १४॥
करोद्वर्त्तनताम्बूलमुखवासान् ददुस्तथा।
देवस्यारूरुपन् मूर्द्ध्नि दुर्व्वापुष्पाक्षतानि च॥ १५॥
एवं पञ्चोपचारेण मानवा भूसुरादयः।
शिवमोजु र्जपञ्चक्रुः प्रचक्रुश्च प्रदक्षिणाम्॥ १६॥
नृत्यै र्गीतै र्महोत्साहैः वाद्यैश्च मधुरस्वनैः।
हां हुङ्कारैः[1] समुल्लासैर्वाह्वयन्नुग्रमाधवम्॥ १७॥

---

(१) क, हा ओङ्कारैः।

केचित्पञ्चाङ्गयुक्तेन साष्टाङ्गेन तथापरे ।
प्रणेमुस्थापयामासुः स्तोत्रैश्च मधुरस्वनैः ॥ १८ ॥
झल्लकै झल्लरीभिश्च मृदङ्गैर्मर्द्दलैस्तथा ।
मुरलीभिश्च तन्त्रीभिः केचिदीजुः स्वयम्भुवम् ॥ १९ ॥
जयमङ्गलगाथाभिर्धारणीभिश्च गीतिभिः ।
शङ्करं भिक्षुभिक्षुण्योजुर्गानैश्च भाषजैः ॥ २० ॥
सुस्वरै र्वेदपाठैश्च विप्रा वेदविदां वराः ।
क्षत्रिया स्वर्णरत्नादिछत्रकैश्च महोत्तमैः ॥ २१ ॥
वणिकाश्चूड़ामणिभिः सौवर्णै र्विल्वपत्रकैः ।
शूद्राश्च पूजयामासु र्विविधैश्च क्रियाफलैः ॥ २२ ॥
अथान्ये आगता ये च जातयो रजकादयः ।
ते सर्व्वे दूरतः स्थित्वा प्रणेमुश्च पुनः पुनः ॥ २३ ॥

इत्यानन्द[1]भट्टप्रोक्ते वल्लालचरिते[2] उग्रमाधवपूजनं
नाम षष्ठोध्यायः ।

---

(१) ख, इति श्रीमदानन्द ० ।
(२) ख, उत्तरखण्डे इत्यधिकं पठति ।

## अथ सप्तमोऽध्यायः[1]।

कस्मिंश्चित् काले पद्माक्षी वल्लालदयिता पुरा।
शङ्करं पूजितुं तत्र महास्थानमुपागता ॥ १ ॥
गृहीत्वा बहुद्रव्याणि हैमानि राजतानि च।
आतपत्रञ्च देवस्य देव्याश्च कर्णपालिकाम् ॥ २ ॥
प्रालम्बिकाञ्च कटकं किरीटं कण्ठभूषणम्।
अङ्गदं कङ्कणं सारशनञ्च नूपुरादिकम् ॥ ३ ॥
वस्त्राणि च महार्हाणि पताकाश्च ध्वजानि च।
यज्ञसूत्राणि गन्धानि नानोपकरणानि च ॥ ४ ॥
अर्च्चयामास देवं सा देवीं च स पुरोहितः।
नैवेद्यै स्तैरलङ्कारैश्छत्रेण च परं मुदा ॥ ५ ॥
पूजयित्वा गता[2] देवी सारुह्य ह्ययनं वरम्।
पुरोहितः स्थितस्तत्र द्रव्याणामंशकाङ्क्षया ॥ ६ ॥
स महान्तम् धर्म्मगिरिं वलदेव उवाच ह।
भदन्त देहि मे भागम् मत्प्राप्यमचिरेण भोः ॥ ७ ॥
तच्छ्रुत्वा तद्वचः स्थानाधिपः स प्रत्युवाच तम्।
अददाम न कस्मैचित् भागमेव कदाचन ॥ ८ ॥

---

(१) कपुस्तके, नास्ति।

(२) ख, पूजयित्वा ययौ।

अतो न दद्यां भवते गच्छ गच्छ गृहं व्रज ।
इत्थं ताभ्यामभूत्तत्र वाक्पारुष्यं कियत्क्षणम् ॥ ९ ॥
वलदेवस्ततः क्रुद्धो देवलेशं शशाप ह ।
निपतध्वमरे मूढ़ न ते भद्रं भविष्यति ॥ १० ॥
श्रुत्वा तद्देवलेशस्त्वं क्रोधम्लेच्छाननाननः ।
वलदेवं गण्डदेशे चपेटेन व्यतीतड़त् ॥ ११ ॥
आदिशत् व्यायतान् शिष्यान् एषोपसार्य्यतामिति ।
ततस्ते पुरुषाश्चक्रुः गुरोराज्ञाप्रपालनम् ।
वलदेवस्ततोऽगच्छद्द्रुतं नृपतिसन्निधिम् ॥ १२ ॥
आद्योपान्तं यथावृत्तं नृपे सर्व्वमचीकथत् ।
पार्षदा ब्राह्मणाश्चापि चक्रुस्तस्य समर्थनम् ॥ १३ ॥
वलदेवस्य वाक्यस्य प्रोचुश्च दण्डतां गिरेः ।
एवं विज्ञाय राजासावपमानं पुरोधसः ।
मन्युना स प्रजज्वाल[1] वह्निना पटलं यथा ॥ १४ ॥
निर्व्वास्यतां धर्म्मगिरी राष्ट्रान्मे स्वगणैः सह ।
इति राजा रुद्रनागमन्वशात् दण्डनायकम् ॥ १५ ॥

निधिर्गुणानां स्वजनैकबन्धुः
सत्यं विधातुर्द्विजवर्य्यवाक्यम् ।

---

(१) ख, तदा क्रोधेन जज्वाल ।

चकार राष्ट्रात् स वहिष्कृतं तं
गणेन सार्द्धं किल राजसिंहः॥

इत्यानन्द[1]भट्टप्रोक्ते वल्लालचरिते[2] देवलानां निर्व्वासनं नाम सप्तमोऽध्यायः।

(१) ख, इति श्रीमदानन्द०।

(२) ख, उत्तरखण्डे इत्यधिकः पाठः।

## अथ अष्टमोऽध्यायः[1] ।

ॐनमः शिवाय ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततोजयमुदीरयेत् ॥ १ ॥

ॐनमो भगवते वासुदेवाय[2] ।

नमोऽस्तु सिंहगिरये प्रभवेऽद्भुतशक्तये ।
वल्लालभूपति र्निन्ये मार्गे येन सनातने ॥ २ ॥
अथ श्रीवल्लालसेनः पुरा गौड़े पुरोत्तमे ।
नानारत्नज्वलत्शोभा[3]सभायां सुखमासते ॥ ३ ॥
नीलकुञ्चितकेशान्तव्यालोलचूर्णकुन्तलाः ।
सभा[4]जनाक्षिभ्रमरैः पीयमानमुखाम्बुजाः ॥ ४ ॥
कञ्चुकितस्तनाभोगाः क्वनद्वलयकङ्कणाः ।
सुवस्त्राश्चारुसर्व्वाङ्ग्यः आरक्तदशनच्छदाः ॥ ५ ॥
आविष्कुर्व्वद्बाहुमूला नृत्यद्धस्ता इव स्त्रियः ।
सेवयन्ति नृपं तत्र चलच्चामरमारुतैः ॥ ६ ॥
राजन्या राजपुत्राश्च वावदूककविटादयः ।
उपासते स्म वल्लालं ब्राह्मणाश्च महौजसः ॥ ७ ॥

---

(१) आदर्शपुस्तकयोर्नास्ति ।

(२) ख पुस्तके, नास्ति ।

(३) ख, ० द्योतमान ० ।

(४) ख, प्रेक्षि ० ।

गीतै र्हस्तैर्नृत्यैश्च नर्त्यो हरिणलोचनाः।
भृकुंशाश्च वाद्यविदो वाद्यैश्च रमयन्ति तम् ॥ ८ ॥
कदाचिद्वेदवेदाङ्गोपनिषद्धर्म्मशास्त्रवित्।
इतिहासपुराणानां वेत्ता लोकनमस्कृतः ॥ ९ ॥
मेधावी नयवान् वाग्मी महाराजगुरुर्मुनिः[1]।
योगीश्वरो महाप्राज्ञः सर्व्वशास्त्रविशारदः ॥ १० ॥
भट्टः सिंहगिरि र्नाम शिष्यैः परिवृतस्तदा[2]।
उद्भासयन् दिशः सर्व्वाः श्रिया परमया ज्वलन् ॥ ११ ॥
सभास्थं राजवल्लालं द्रष्टुकामो मनोजवः।
वदरिकाश्रमोद्देशं भ्रमन् तामगमत् सभां ॥ १२ ॥
जयाशीर्भि र्वर्द्धयन्तं विलोक्य नृपति र्मुनिम्।
प्रत्युत्पत्यासनात् तूर्णं ववन्दे चरणौ मुनेः ॥ १३ ॥
दत्त्वासनं ततस्तस्मै भक्त्या प्रीत्या च पार्थिवः।
धनैः रत्नै र्यथाकामैः पूजयामास यत्नतः ॥ १४ ॥
वल्लालेनार्च्चितो राज्ञा मुनिः प्रीतमनास्तदा।
अनामयञ्चाव्ययञ्च पर्य्यपृच्छज्जनेश्वरम् ॥ १५ ॥
वलदेवं समागम्य सस्मितो मुनिसत्तमः।
प्रतिपूज्य यथान्यायं पप्रच्छ कुशलं तदा[3] ॥ १६ ॥
स हृष्टमानसो राजा भट्टसिंहगिरिं मुनिम्।
उवाच परमप्रीतस्तापसं द्योतितप्रभम् ॥ १७ ॥

(१) ख, गुरुः।
(२) ख, सुनिः।
(३) ख, कुशलादिकम्।

अद्य मे सफलं जन्म मद्गृहञ्च पवित्रितम्।
भवदभ्यागमेनैव सुप्रभाता विभावरी ॥ १८ ॥
ततो विश्रान्तमालक्ष्य तं मुनिं संशितव्रतम्।
सुखासीनमुपासीन उवाच भुवनेश्वरः ॥ १९ ॥

राजोवाच।

भगवन् सर्व्वशास्त्रज्ञः सर्व्वज्ञः सर्व्वतत्त्ववित्।
भवतोऽविदितं किञ्चिन्नास्तीति कृपया वद ॥ २० ॥
चतुर्व्वर्णसमुत्पत्तिं गोत्रवंशादिकं शुभम्।
वर्णानां शङ्करोत्पत्तिं कथयस्व च मे मुने ॥ २१ ॥
इति राज्ञो वचः श्रुत्वा सन्तोषविशदाननः।
प्रत्युवाच महातेजा स्ततो नारायणात्मजः ॥ २२ ॥

सिंहगिरिरुवाच।

शुश्रूषुभ्यो यथा राजन् राजर्षिभ्यस्तपोनिधिः।
कृष्णद्वैपायनः प्राह तथाद्य कथयामि ते ॥ २३ ॥
वदरिकाश्रमे पुण्ये देवदारुवनालये।
नानापक्षिमृगाकीर्णे शान्तिकान्तिनिकेतने ॥ २४ ॥
हुतहव्यं त्रिकालज्ञं महर्षिं चिरजीविनम्।
व्यासं राजर्षयः सुस्थं प्रणिपत्योपतस्थिरे ॥ २५ ॥

राजर्षय ऊचुः।

गताः स्म नैमिषारण्यं पुरीं वाराणसीमपि।
भवान् न च शुको दृष्टः सौति र्वा शौनकादयः ॥ २६ ॥

दिष्ट्या दृष्टोऽसि भगवं श्चिरेणाद्य गिराविह।
सुचिरं मार्गमाणानां कृष्णो भक्तिमतामिव॥ २७॥
विभाजितस्त्वया वेदः पुरा सत्यवतीसुत।
इतिहासपुराणानि कथितान्यनुकम्पया॥ २८॥
कथितं धर्म्मशास्त्रञ्च कलिः सम्प्रति वर्त्तते।
कृष्णोऽपि पलितैः केशैः शुक्लतां गतवानसि॥ २९॥
अतोद्य कथय ब्रह्मन् स्वयमेव महामुने।
पुराणं धर्म्मतत्त्वञ्च ह्यनुग्राह्या वयं तव॥ ३०॥
भवन्तं नहि त्यक्ष्यामः पुराणकथनं विना।
बद्धोऽस्ति पदयो र्भक्तिदामभि स्त्ववशो भवान्॥ ३१॥
इति तेषां वचः श्रुत्वा स किञ्चित् प्रहसन्निव।
उवाच वाग्विदां श्रेष्ठः श्रूयतां कथयामि वः॥ ३२॥

इति[1] वल्लालचरिते[2] व्यासपुराणे अष्टमोऽध्यायः।

---

(१) ख, श्रीमदानन्दभट्टप्रोक्ते इत्यधिकः पाठः।
(२) ख उत्तरखण्डे इत्यधिकः पाठः।

# अथ नवमोऽध्यायः[1] ।

व्यास उवाच ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥
तस्माद्विराड़जायत विराजोऽधिपूरुषः ।
ततोऽभिध्यायतो रुद्रो ललाटाच्च व्यजायत ॥ २ ॥
चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽजायत ।
मुखादिन्द्रश्च अग्निश्च प्राणाद्वायुरजायत ॥ ३ ॥
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ।
वशिष्ठश्च महातेजाः सोऽसृजत्सप्त मानसान् ॥ ४ ॥
लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत् ॥ ५ ॥
सृज्यमानाः प्रजा नैव विवर्द्धन्ते यदा यदा ।
द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स ससृजे विविधाः प्रजाः ॥ ६ ॥
दिवञ्च पृथिवीञ्चैव महिम्ना व्याप्य तिष्ठतः ।
पितृणान्तु गणाः सप्त पुराणे कथिता मया ॥ ७ ॥
वैराजा अग्निष्वात्ताश्च तथा वर्हिषदः स्मृताः ।
सुकालाश्च हविष्मन्तः सुस्वधाश्चैव सोमपाः ॥ ८ ॥

---

(१) क पुस्तके नास्ति ।

एषामाद्यास्त्रयो भूपाः पितरोऽमूर्त्तयः स्मृताः ।
सुकालाद्याश्च चत्वारः सप्तैवैते गणाः स्मृताः ॥ ९ ॥
विराट्सुताः सोमसदः अग्निष्वात्ता मरीचिजाः ।
पौलस्त्याश्च वर्हिषदः सुकालाश्च वशिष्ठजाः ।
सुस्वधाः पुलहाज्जाताः सोमपास्तु कवेः सुताः ॥ १० ॥
सुकालाश्च हविष्यन्तान् सुस्वधाश्चैव सोमपान् ।
ब्रह्मक्षत्रियविट्शूद्रा भावयन्ति फलार्थिनः ॥ ११ ॥
यत्र ते तु गणा मुख्याः पितॄणां परिकीर्त्तिताः ।
तेषामपि हि विज्ञेयं पुत्रपौत्रमनन्तकम् ॥ १२ ॥
विश्वो विश्वभुगाराध्यो धर्म्मो धन्यः शुभाननः ।
भूतिदो भूतिकृद्भूतिः पितॄणाञ्च गणा नव ॥ १३ ॥
कल्याण कल्यताकर्त्ता कल्यः कल्यतराश्रयः ।
कल्यताहेतुरनघः षड़िमे च गणाः स्मृताः ॥ १४ ॥
वरो वरेण्यो वरदः पुष्टिदस्तुष्टिदस्तथा ।
विश्वपाता तथा धाता सप्तैवैते तथा गणाः ॥ १५ ॥
महान् महात्मा महितो महिमावान् महाबलः ।
गणाः पञ्च तथैवैते पितॄणां पापनाशनाः ॥ १६ ॥
सुखदो धनदश्चान्यो धर्म्मदो न्यश्च भूतिदः ।
पितॄणां कथ्यते चैतत् तथा गणचतुष्टयम् ॥ १७ ॥
इति बल्लालचरिते[1] व्यासपुराणे सृष्टिविसृष्टिकथनं
नाम नवमोऽध्यायः ।

---

(१) ख, उत्तरखण्डे भट्टप्रोक्ते ।

## अथ दशमोऽध्यायः[१] ।

व्यास उवाच ।

विराजमसृजत्कालः सोऽसृजत् पुरुषं विराट् ।
पुरुषं तं मनुं विद्धि विराज ऊरुसम्भवम् ॥ १ ॥
स सृष्ट्वा तु प्रजास्त्वेव आपवः स प्रजापतिः ।
लब्धवान् पुरुषः पत्नीम् शतरूपामयोनिजाम् ॥ २ ॥
वैराजात् पुरुषात् वीरं शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ वीरात् काम्या व्यजायत ॥ ३ ॥
काम्या नाम महाभागा कर्द्दमस्य प्रजापतेः ।
कन्या पुत्राश्च चत्वारः सम्राट् कुक्षि र्विराट् प्रभुः ॥ ४ ॥
प्रियव्रतं समासाद्य पतिं सा जनयत् सुतान् ।
उत्तानपादं जग्राह पुत्त्रमत्रिः प्रजापतिः ॥ ५ ॥
उत्तानपादाच्चतुरः सुनृता सुषुवे सुतान् ।
धर्म्मस्य कन्या सुश्रोणी सुनृता नाम विश्रुता ॥ ६ ॥
उत्पन्ना वाजिमेधेन ध्रुवस्य जननी शुभा ।
ध्रुवञ्च कीर्त्तिमन्तञ्च आयुष्मन्तं वसुन्तथा ।
उत्तानपादोऽजनयत् सुनृतायां प्रजापतिः ॥ ७ ॥

---

(१) कपुस्तके नास्ति ।

सप्तर्षीणां पुरःस्थानं ध्रुवश्च तपसाप्तवान्।
तस्मात् श्लिष्टिश्च भव्यश्च ध्रुवाच्छम्भुर्व्यजायत॥ ८॥
श्लिष्टेराधत्त सुच्छाया पञ्चपुत्रानकल्मषान्।
रिपुं रिपुञ्जयं रिप्रं वृकलं[1] वृकतेजसम्॥ ९॥
रिपोराधत्त वृहती चाक्षुषं सर्व्वतेजसम्।
अजीजनत् पुष्करिण्यां वीरण्यां चाक्षुषो मनुम्॥ १०॥
प्रजापतेरात्मजायामरण्यस्य महात्मनः।
मनोरजायन्त दश नड्वलायां महौजसः॥ ११॥
कन्यायां मानवश्रेष्ठा वैराजस्य प्रजापतेः।
ऊरुः पुरुः शतद्युम्नस्तपस्वी सत्यवाक् कविः॥ १२॥
अग्निष्टुरतिरात्रश्च सुद्युम्नश्चेत्यमी नव।
अभिमन्युश्च दशमो नड्वलायां महौजसः॥ १३॥
ऊरोरजनयत् पुत्रान् षड़ाग्नेयी महाप्रभान्।
अङ्गं सुमनसं स्वातिं[2] क्रतुमङ्गिरसं गयम्॥ १४॥
अङ्गात् सुनीथकन्यायां वेण एको व्यजायत।
वेणस्य मथिते पाणौ सम्बभूव पृथुर्नृपः॥ १५॥
पृथु वैंण्यस्तदा चेमां ररक्ष क्षत्रपूर्व्वजः।
राजसूयाभिषिक्तानामाद्यः स पृथिवीपतिः॥ १६॥
तस्माच्चैव समुत्पन्नौ निपुणौ सुतमागधौ।
पृथोः पुत्रौ तु धर्म्मज्ञौ जज्ञातेऽन्तर्द्धिपालिनौ॥ १७॥

---

(१) ख, वृकषम्।

(२) ख, ख्यातिम्।

शिखण्डिनी हविर्धानमन्तर्द्धानाद्व्यजायत।
हविर्द्धानात् षड़ाग्नेयी धीषणा जनयत् सुतान्॥ १८॥
प्राचीनवर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ।
प्राचीनवर्हिर्भगवान् महानासीत् प्रजापतिः॥ १९॥
समुद्रतनयायान्तु कृतदारोऽभवत् प्रभुः।
सुवर्णाधत्त सामुद्री दश प्राचीनवर्हिषः॥ २०॥
सर्व्वे प्रचेतसो नाम धनुर्व्वेदस्य पारगाः।
प्रजापतित्वं सम्प्राप्य तुष्टाः प्राचीनवर्हिषः॥ २१॥
भूः खं व्याप्तं हि तरुभिस्तांस्तरूनदहंश्च ते।
द्रुमक्षयमथो बुद्ध्वा किञ्चिच्छिष्टेषु शाखिषु।
उपगम्याब्रवीदेतान् राजा सोमः प्रजापतीन्॥ २२॥
कोपं यच्छत दास्यन्ति कन्यां वो मारिषां वराम्।
तपस्विनो मुनेः कण्डोः प्रम्लोचायां ममैव च॥ २३॥
भविष्यं जानता सृष्टा भार्य्या वोऽस्तु कुलङ्करी।
अस्यामुत्पत्स्यते दक्षः प्रजाः संवर्द्धयिष्यति॥ २४॥
प्रचेतसस्तां जगृहु र्दक्षोऽस्याञ्च ततोऽभवत्।
दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः॥ २५॥
दक्षो जज्ञे महातेजाः सोमस्यांशेन भूमिपाः।
पुत्रानुत्पादयामास शतशोऽथ सहस्रशः।
हर्य्यश्व नाम दक्षस्य सहस्राणि च पञ्च च
पुत्राणां वेदितुं पृथ्व्याः प्रमाणं हि गतादिशः॥ २६॥

ततोऽन्यपुत्रसाहस्रं तेषामन्वेषणे गतम् ।
अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः ॥ २७ ॥

इति बल्लालचरिते[1] व्यासपुराणे स्वायम्भुव वंशकथनं नाम दशमोऽध्यायः[2] ।

---

(१) ख, उत्तरखण्डे भट्टप्रोक्ते।

(२) ख, पुस्तकद्वयेऽपि अत्र नवम इत्युक्तम्। तल्लिपिकरप्रमाद इत्याभाति।

# एकादशोऽध्यायः[१] ।

सिंहगिरिरुवाच ।

ब्रह्मणो मानसादत्रिः सोमस्तत्पुत्रतां गतः ।
तस्य वंशं प्रवक्ष्यामि यत्र जातोऽसि पार्थिव ॥ १ ॥

व्यास उवाच ।

कृत्वा सोमो राजसूयं त्रैलोक्यं दक्षिणां ददौ ।
सदस्येभ्यश्च मुख्येभ्यो ब्रह्मर्षिभ्यः परन्तपाः ॥ २ ॥
समाप्तेवभृथे सोमं तद्रूपालोकनेप्सवः ।
कामवाणाभितप्ताङ्ग्यो नवदेव्यः सिषेविरे ॥ ३ ॥
शिनीवाली कर्दमञ्च हविष्मन्तं क्रतुः स्वयम् ।
द्युतिर्विभावसुं त्यक्त्वा पुष्टिर्धातारमव्ययम् ॥ ४ ॥
प्रभा प्रभाकरं त्यक्त्वा वसुर्मारीचकाश्यपम् ।
कीर्त्तिर्जयन्तं भर्त्तारं नन्दीं त्यक्त्वा पतिं धृतिः ।
लक्ष्मीर्नारायणं त्यक्त्वा सोममेवाभजत् तदा ॥ ५ ॥
सोमोऽपि कामयामास स्वकीया इव तास्तदा ।
बृहस्पतेः स वै भार्य्यां तारां नाम यशस्विनीम् ॥ ६ ॥
जहार तरसा सोमो ह्यवमत्याङ्गिरः सुतम् ।
स याच्यमानो देवैश्च सोमो देवर्षिभिः सह ॥ ७ ॥

---

(१) लिपिकरप्रमादवशात् अयं सर्व्वास्वपि पुस्तके दशम इति पठ्यते ।

आङ्गिरसे तदा तस्मै तारां नैव व्यवसर्ज्जयत्।
स संरब्धस्ततस्तस्मिन् देवाचार्य्यो बृहस्पतिः॥ ८॥
उशनास्तस्य जग्राह पार्ष्णिमाङ्गिरसस्तदा।
स हि शिष्यो महातेजाः पितुः पूर्व्वो बृहस्पतेः॥ ९॥
तेन स्नेहेन भगवान् रुद्रस्तस्य बृहस्पतेः।
पार्ष्णिग्राहोऽभवद्देवः प्रगृह्याजगवं धनुः॥ १०॥
तेन ब्रह्मशिरो नाम परमास्त्रं महात्मना।
उद्दिश्य दैत्यानुत्सृष्टं येनैषां नाशितं यशः॥ ११॥
तत्र युद्धमभूद्घोरं प्रख्यातं तारकामयम्।
देवानां दानवानाञ्च लोकक्षयकरं महत्॥ १२॥
तत्र शिष्टास्तु ये देवाः तुषिताश्चैव पार्थिवाः।
ब्रह्माणं शरणं जग्मुरादिदेवं सनातनम्॥ १३॥
ब्रह्मा निवार्य्योशनसं तारामाङ्गिरसे ददौ।
तामन्तःप्रसवां दृष्ट्वा गर्भं त्यजाब्रवीद्गुरुः॥ १४॥
गर्भस्त्यक्तः प्रदीप्तोऽथ प्राहाहं सोमसम्भवः।
एवं सोमाद्बुधः पुत्रः पुत्रस्तस्य पुरूरवाः॥ १५॥
उर्व्वश्यां जज्ञिरे यस्य पुत्राः सप्त महात्मनः।
गन्धर्व्यां सुमहात्मानः आयुर्धीमानमावसुः॥ १५॥
विश्वायुश्चैव धर्म्मात्मा श्रुतायुश्च तथापरः।
दृढ़ायुश्च वनायुश्च शतायुश्चोर्व्वशीसुताः॥ १६॥
स्वर्भानुतनयायां तु प्रभायां जज्ञिरे पुरा।

सिंहगिरिरुवाच ।

तेषां वंशेषु वल्लाल महात्मानो महौजसः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा जाताः सहस्रशः ॥ १७ ॥

व्यास उवाच ।

आयुषः नहुषः पुत्रो वृद्धशर्म्मा ततः परम् ।
रम्भो रजिरनेनाश्च रजेः पुत्रशतं ह्यभूत् ॥ १८ ॥
राजेयमिति विख्यातं विष्णुदत्तवरो रजिः ।
युद्धे देवासुरे दैत्यानवधीत् सुरयाचितः ॥ १९ ॥
उत्पन्ना पितृकन्यायां विरजायां महौजसः ।
नहुषस्य सुताः सप्त षड़िन्द्रोपमतेजसः ॥ २० ॥
यतिर्ययातिः संयाति रायातिः पाञ्चिको भवः ।
सुयातिः षष्टस्तेषां वै ययातिः पार्थिवोऽभवत् ॥ २१ ॥
यतिस्तु मोक्षमास्थाय ब्रह्मभूतोऽभवन्मुनिः ।
तेषां ययातिः पञ्चानां विजित्य वसुधामिमाम् ।
देवयानीमुशनसः सुतां भार्य्यामवाप सः ॥ २२ ॥
शर्म्मिष्ठामासुरीं चैव तनयां वृषपर्व्वणः ।
यदुञ्च तुर्व्वसुञ्चैव देवयानी व्यजायत ।
द्रुह्युं चानुं पुरुञ्चैव शर्म्मिष्ठा वार्षपर्व्वणी ॥ २३ ॥
यदुः पुरुश्चाभवतां तेषां वंशविवर्द्धनौ ।
शृणुताथ यदोस्तस्य वंशमद्भुतपौरुषम् ॥ २४ ॥
बभूवुस्तु यदोः पुत्राः पञ्च देवसुतोपमाः ।
सहस्रदः पयोदश्च क्रोष्टा नीलोऽञ्जिकस्तथा ॥ २५ ॥

सहस्रदस्य दायादास्त्रयः परमधार्म्मिकाः ।
हैहयश्च हयश्चैव राजा वेणुहयस्तथा ॥ २६ ॥
हैहयस्याभवत्पुत्रो धर्म्मनेत्र इति श्रुतः ।
धर्म्मनेत्रस्य कार्त्तस्तु साहञ्जस्तस्य चात्मजः ।
साहञ्जनी नाम पुरी तेन राज्ञा निवेशिता ॥ २७ ॥
साहञ्जस्य तु दायादो महिष्मान्नाम पार्थिवः ।
माहिष्मती नाम पुरी तेन राज्ञा निवेशिता ॥ २८ ॥
आसीन्महिष्मतः पुत्रो भद्रश्रेण्यः प्रतापवान् ।
वाराणस्यधिपो राजा पुराणे परिकीर्त्तितः ॥ २९ ॥
भद्रश्रेण्यस्य दायादो दुर्द्दमो नाम विश्रुतः ।
दुर्द्दमस्य सुतो राजा कणको नाम विश्रुतः ॥ ३० ॥
कणकात् कृतवीर्य्यस्तु कृताग्निः करवीरकः ।
कृतौजाश्च चतुर्थोऽभूत् कृतवीर्य्यादथार्ज्जुनः ॥ ३१ ॥
यः स बाहुसहस्रेण सप्तद्वीपेश्वरो भवत् ।
जिगाय पृथिवीमेको रथेनादित्यवर्च्चसा ॥ ३२ ॥
लङ्केशं मोहयित्वा तु सबलं रावणं बलात् ।
असौ बद्ध्वा धनुर्ज्याभि रुत्सिक्तं पञ्चभिः शरैः ॥ ३३ ॥
निर्ज्जित्यैव समानीय माहिष्मत्यां बबन्ध तम् ।
तस्य बाहुसहस्रन्तु युध्यतो भुवनेश्वराः ।
योगाद्योगेश्वरस्यैव प्रादुर्भवति मायया ॥ ३४ ॥
अहो बत मृधे वीर्य्यं भार्गवोऽस्य यदाच्छिनत् ।
राज्ञो बाहुसहस्रन्तु हैमतालवनं यथा ॥ ३५ ॥

जामदग्न्यात्तदा रामात् बाहुजान् क्षत्रियान् घ्नतः ।
कार्त्तवीर्य्यस्य महिषी पलायत सुदारुणात् ॥ ३६ ॥
अन्तर्व्वत्नी तु सा देवी सुषुवे कौशिकाश्रमे ।
पुत्रं सुभीमनामानम् बालार्कमिव सुन्दरम् ॥ ३७ ॥
स मात्रा वर्द्धितः काले पुत्रः सरसिजाननः ।
कौशिकात् प्रतिजग्राह धनुर्व्वेदं महाभुजः ॥ ३८ ॥
ब्राह्मणं पितृहन्तारं श्रुत्वा मातृमुखाद्युवा ।
जगाम ब्राह्मणान् हन्तुं दिक्षु क्रोधारुणेक्षणः ॥ ३९ ॥
एकविंशतिवारान् स महीमब्राह्मणामिमाम् ।
चकारातो न विद्यन्ते ब्राह्मणा मुखजाः कलौ ॥ ४० ॥
शवरान् कटुकैवर्त्तान् विलोक्य भार्गवस्ततः ।
अब्राह्मण्ये तदा देशे तेषां सूत्रमकल्पयत् ॥ ४१ ॥
तुष्यन्ति भूषणैर्नार्य्यो गावः स्वच्छन्दचारतः ।
कुञ्जराः पांशुवर्षेण किं त्वेते परनिन्दया ॥ ४२ ॥
जामदग्न्यं ततो युद्धे जघानार्ज्जुननन्दनः ।
एवं स ब्राह्मणान् जित्वा सुभीमोऽभूज्जयध्वजः ॥ ४३ ॥
ततो विप्राः सुतार्थिन्यः क्षत्रियानुपतस्थिरे ।
जातयो जज्ञिरे तासु कदम्बपल्लवादयः ॥ ४४ ॥
ब्रह्महत्या पापविद्धो निर्वृतिं सोऽलभन्नृपः ।
अयष्ट वाजिमेधेन यज्ञं पापविनाशनम् ॥ ४५ ॥ *
तस्य ययोः प्रतिकृतिरद्याप्यस्ति शिलामयी ।
माहिष्मतीपुरे रम्ये नर्म्मदातटिनीतटे ॥ ४६ ॥

कार्त्तवीर्य्यस्य तु शतं पुत्राणाम् पञ्च वै पराः।
शूरसेनश्च शूरश्च धृष्टोक्तः कृष्ण एव च।
जयध्वज इति ख्यातः सुभीमश्च महावलः॥ ४७॥
जयध्वजात् तालजङ्घः तालजङ्घात् शतं सुताः।
तालजङ्घा इति ख्याताः शूरा उत्तमपौरुषाः॥ ४८॥
तेषां कुलेऽतिविमले हैहयानां महात्मनाम्।
वीतिहोत्राः स्वयं जाताः भोजाश्चावन्तयः स्मृताः॥ ५९॥
तोण्डिकेयाश्च विख्यातास्तालजङ्घास्तथैव च।
भरताश्च सुजाताश्च पुराणे कथिता मया॥ ५०॥
वृषप्रभृतयो वीराः यादवाः पुण्यकर्म्मिणः।
वृषो वंशधरस्तत्र तस्य पुत्रोऽभवन्मधुः॥ ५१॥
मधोः पुत्रशतं त्वासीत् वृषणस्तस्य वंशकृत्।
वृषणात् वृष्णयः सर्व्वे मधोस्तु माधवाः स्मृताः॥ ५२॥
यादवाश्च यदोर्जाता वहुत्वान्नानुकीर्त्त्यते।
तुर्व्वसोर्यवना जाता भोजा द्रुह्योः सुताः स्मृताः।
अनोर्म्लेच्छजातयस्तु पुरोस्तु पौरवाः स्मृताः॥ ५७॥

इति वल्लालचरिते[1] व्यासपुराणे सोमवंशवर्णनं नाम
एकादशोऽध्यायः।

---

(१) ख, उत्तरखण्डे भट्टप्रोक्ते इत्यधिकः।

# अथ द्वादशोऽध्यायः(१) ।

सिंहगिरिरुवाच ।

शृणु राजन् व्यासप्रोक्तं वंशमुत्तमपौरुषम् ।
विस्तरेणानुपूर्व्व्यां च यत्र जातोऽसि पार्थिव ॥ १ ॥

व्यास उवाच ।

पुरोः पुत्रो महावीर्य्यो राजासीज्जनमेजयः ।
प्रचिन्वांस्तु सुतस्तस्य यः प्राचीमजयद्दिशम् ॥ २ ॥
प्रचिन्वतः प्रवीरोऽभुत् मनस्युस्तस्य चात्मजः ॥
राजा चाभयदो नाम मनस्योरभवत् सुतः ॥ ३ ॥
तथैवाभयदस्यासीत् सुधन्वा नाम पार्थिवः ।
सुधन्वनो वहुगवः सम्पातिस्तस्य चात्मजः ॥ ४ ॥
सम्पातेस्तु रहम्पाती रौद्राश्वस्तस्य वै सुतः ।
रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ॥ ५ ॥
ऋचेयुः प्रथमस्तेषां कृकनेयु द्वितीयकः ।
कक्षेयुः स्थण्डिलेयुश्च सन्नतेयुर्महामतिः ॥ ६ ॥
दशार्णेयुर्जलेयुश्च स्थलेयुश्च महाबलः ।
बलनित्यो बलेयुश्च रौद्राश्वसूनवो दश ॥ ७ ॥

---

(१) क पुस्तके, नास्ति ।

कक्षेयोस्तनयास्त्वासन् त्रय एव महाबलाः ।
सभानरश्चाक्षुषश्च परमन्युस्तथैव च ॥ ८ ॥
सभानरस्य पुत्रस्तु विद्वान् कालानलो नृपः ।
कालानलस्य धर्म्मज्ञः सृञ्जयो नाम वै सुतः ॥ ९ ॥
सृञ्जयस्याभवत् पुत्रो वीरो राजा पुरञ्जयः[1] ।
पुरञ्जयात्मजः श्रीमान् राजाभूज्जनमेजयः ॥ १० ॥
महाशालस्तु राजर्षिर्जनमेजयदेहजः ।
देवेषु स परिज्ञातः प्रतिष्ठितयशा भुवि ॥ ११ ॥
महामना नाम सुतो महाशालस्य धार्म्मिकः ।
जज्ञे वीरः शूरगणैः पूजितः स महामनाः ॥ १२ ॥
महामनास्तु पुत्रौ द्वौ जनयामास सत्तमः ।
उशीनरञ्च धर्म्मज्ञं तितिक्षुञ्च महाबलम् ॥ १३ ॥
उशीनरस्य पत्न्यस्तु पञ्चराजर्षिवंशजाः ।
नृगा कृमिर्नवा दर्व्वा पञ्चमी च दृषद्वती ॥ १४ ॥
उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः ।
तपसा चैव महता जाता वृद्धस्य चात्मजाः ॥ १५ ॥
नृगायान्तु नृगः पुत्रः कृम्यां कृमिरजायत ।
नवायास्तु नवः पुत्रो दर्व्वायाः सुव्रतोऽभवत् ॥ १६ ॥
दृषद्वत्यास्तु संजज्ञे शिविरौशीनरो नृपः ।
शिवेस्तु शिवयः ख्याताः यौधेयास्तु नृगस्य ह ॥ १७ ॥

---

(१) खपुस्तके, पुरञ्जय इत्यत्र परञ्जय इति पाठः ।

नवस्य नवराष्ट्रन्तु कृमेस्तु कृमिला पुरी।
सुव्रतस्य तथाम्बष्ठाः शिबिपुत्रान् निबोधत ॥ १८ ॥
शिबेस्तु शिवयः पुत्राश्चत्वारो लोकविश्रुताः।
वृषदर्भः सुवीरश्च कैकेयो मद्रकस्तथा ॥ १९ ॥
तेषां जनपदाः स्फीताः कैकेया मद्रकास्तथा।
वृषदर्भाः सुवीराश्च तितिक्षोः शृणुत प्रजाः ॥ २० ॥
तैतिक्षवो भवद्राजा पूर्व्वस्यां दिशि पार्थिवाः।
उषद्रथो महासत्वः फेणस्तस्य सुतोऽभवत् ॥ २१ ॥
फेणात्तु सुतपा जज्ञे सुतः सुतपसो बलिः।
जातो मानुषयोनौ स नृपतिः काञ्चनेषुधिः ॥ २२ ॥
महायोगी स तु बलिर्बभूव नृपतिः पुरा।
पुत्रानुत्पादयामास पञ्च वंशकरान् भुवि ॥ २३ ॥
अङ्गः प्रथमतो जज्ञे वङ्गः सुह्मस्तथैव च।
पुण्ड्रः कलिङ्गश्च तथा बालेयं क्षत्रमुच्यते ॥ २४ ॥
बालेया ब्राह्मणाश्चैव तस्य वंशकरा भुवि।
बलेस्तु ब्रह्मणा दत्तो वरः प्रीतेन धीमता ॥ २५ ॥
महायोगित्वमायुश्च कल्पस्य परिमाणतः।
संग्रामे चाप्यजेयत्वं धर्म्मे चैव प्रधानता।
त्रैलोक्यदर्शनञ्चापि प्राधान्यं प्रसवे तथा ॥ २६ ॥
बले चाप्रतिमत्वं वै धर्म्मतत्त्वाभिदर्शनम्।
चतुरो नियतान् वर्णान् त्वञ्च स्थापयितेति ह ॥ २७ ॥

इत्युक्ते विभुना राजा बलिः शान्तिं परां ययौ ।
बलिस्तानभिषिच्येह पञ्चपुत्रानकल्मषान् ॥ २८ ॥
कृतार्थो योगयुक्तात्मा योगमाश्रित्य स प्रभुः ।
अधृष्यः सर्व्वभूतानाम् कालापेक्षी चरन्नृषिः ॥ २९ ॥
कालेन महता धीरः स्वञ्च स्थानमुपागमत् ।
तेषां जनपदाः पञ्च अङ्गा वङ्गा ससुह्मका ॥ ३० ॥
कलिङ्गाः पुण्ड्रकाश्चैव त्वङ्गस्य शृणुत प्रजाः ।
अङ्गपुत्रो महानासीत् राजेन्द्रो दधिवाहनः ॥ ३१ ॥
दधिवाहनपुत्रस्तु राजा दिविरथोऽभवत् ।
विद्वान् धर्म्मरथो नाम तस्य चित्ररथः सुतः ॥ ३२ ॥
तेन धर्म्मरथेनाथ तदा विष्णुपदे गिरौ ।
यजता सह शक्रेण सोमः पीतो महात्मना ॥ ३३ ॥
अथ चित्ररथस्यापि पुत्रो दशरथोऽभवत् ।
लोमपाद इति ख्यातो यस्य शान्ता सुताभवत् ॥ ३४ ॥
तस्य दाशरथिर्वीरः चतुरङ्गो महायशाः ।
ऋष्यशृङ्गप्रसादेन जज्ञे कुलविवर्द्धनः ॥ ३५ ॥
चतुरङ्गस्य पुत्रस्तु पृथुलाक्ष इति श्रुतः ।
पृथुलाक्षसुतो राजा चम्पो नाम महायशाः ॥ ३६ ॥
चम्पस्य तु पुरी चम्पा या मालिन्यभवत्पुरा ।
पूर्णभद्रप्रसादेन हर्य्यक्षोस्य सुतोऽभवत् ॥ ३७ ॥
ततो वैभाण्डकिस्तस्य वारणं शत्रुवारणम् ।
भुव्यवतारयामास मन्त्रैर्वाहनमुत्तमम् ॥ ३८ ॥

हर्य्यश्वस्य तु दायादो राजा भद्ररथः स्मृतः।
पुत्रो भद्ररथस्यासीत् बृहत्कर्म्मा प्रजेश्वरः॥ ३९॥
बृहदर्भः सुतस्तस्य यस्मात् यज्ञे बृहन्मनाः।
बृहन्मनास्तु राजेन्द्रो जनयामास वै सुतम्॥ ४०॥
नाम्ना जयद्रथं वीरं यस्माद्दृढ़रथो नृपः।
आसीत् दृढ़रथस्यापि विश्वजित् कुलनन्दनः॥ ४१॥
दायादस्तस्य कर्णस्तु विकर्णस्तस्य चात्मजः।
तस्य पुत्रशतन्त्वासीदङ्गानां कुलवर्द्धनम्॥ ४२॥
बृहदर्भसुतो यस्तु राजा नाम्ना बृहन्मनाः।
तस्य पत्नीद्वयं चासीत् वैनतेयसुते शुभे॥ ४३॥
यशोदेवी च सत्या च ताभ्यां वंशस्तु विद्यते।
जयद्रथस्तु राजेन्द्रो यशोदेव्यां व्यजायत॥ ४४॥
सत्यायां विजयो नाम ब्रह्मचत्रोत्तरः स्मृतः।
विजयस्य धृतिः पुत्रस्तस्य पुत्रो धृतव्रतः॥ ४५॥
धृतव्रतस्य पुत्रस्तु सत्यकर्म्मा महायशाः।
तस्य पुत्रस्त्वधिरथः सुत इत्यपराभिधः॥ ४६॥
यः कर्णं प्रतिजग्राह तेन कर्णस्तु सूतजः।
कर्णस्य वृषसेनस्तु पृथुसेनस्तदात्मजः॥ ४७॥
पृथुसेनान्वये वीरो वीरसेनो भविष्यति।
गौड़ब्राह्मणकन्यां यः सोमटामुद्वहिष्यति[1]॥ ४८॥

---

(१) क, सोमटां ब्राह्मणीं कन्यां यो राजोदावहिष्यति।

तदन्ववायजन्मानो राजानोऽमितपौरुषाः।
सप्तद्वीपपतीन् वीराः करिष्यन्ति वशानुगान् ॥ ४९ ॥
तद्वंशे सामन्तसेनो भूत्वा पालयिता बली।
आविन्ध्यादासेतुबन्धाद्धरित्रीं सागराम्बराम् ॥ ५० ॥

सिंहगिरिरुवाच।

तस्माद्धेमन्तसेनोऽभूद्राजन् तव पितामहः।
धाम धाम्नां महिम्नाञ्च द्विषद्बलहुताशनः ॥ ५१ ॥
तस्माद्विजयसेनोऽभूद्योऽड़गङ्गसखो नृपः।
योऽजयत् पृथिवीं कृत्स्नां चतुःसागरमेखलाम् ॥ ५२ ॥
तस्य पुत्रोऽसि बल्लाल सार्व्वभौममहोचितः।
प्रत्यर्थि-पृथिवीपाला यस्य ते शरणं गताः ॥ ५३ ॥
ब्रह्मक्षत्रस्य यो योनिर्व्वंशः क्षत्रियपूर्व्वजः।
सेनवंशस्ततोजातः यस्मिञ्जातोऽपि पाण्डव ॥ ५४ ॥
द्वेष्टि यः पाण्डवं मूढ़ो दुर्बुद्धिश्च विनिन्दति।
स विष्ठायां कृमिर्भूत्वा पच्येत नरके चिरम् ॥ ५५ ॥
स वल्लभानन्दचन्द्रश्चन्द्रमायुतवल्लभः।
तस्येदानीं महाराज कार्य्यं भवति शासनम् ॥ ५६ ॥
तस्यास्ति कन्यकारत्नं रूपेणानुपमं भुवि।
सुप्रभामिव नाभागस्तां कन्यां हर पौरव[1] ॥ ५७ ॥

---

(१) ख, पाण्डव।

उच्चन्द्रे सा याति वाला गौरीं स्नातुं यदा यदा ।
तदा तदा त्वरयति द्रष्टुं तामरुणोऽरुणम् ॥ ५८ ॥
दण्डद्वयावशेषायां रजन्यामरुणोदयम् ।
विलोक्य घरियारेषु विश्वसन्ति न नैगमाः ॥ ५९ ॥

इति वल्लालचरिते[1] व्यासपुराणे पुरुवंशकीर्त्तनं नाम
द्वादशोऽध्यायः ।

---

(१) ख पुस्तके, उत्तरखण्डे भट्टप्रोक्ते इत्यधिकः पाठः ।

## अथ त्रयोदशोऽध्यायः[1] ।

व्यास उवाच ।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥
अध्यापनञ्चाध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहं कर्म्म ब्राह्मणानामुदाहृतम् ॥ २ ॥
श्रुतिस्मृती च विप्राणां चक्षुषी देवनिर्म्मिते ।
काणस्तत्रैकया हीनः द्वाभ्यामन्धः प्रकीर्त्तितः ॥ ३ ॥
वैवाहिकेऽग्नौ कुर्व्वीत गृह्यकर्म्म यथाविधि ।
पञ्चयज्ञविधानञ्च पंक्तिञ्चान्वहिकीं गृही ॥ ४ ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ५ ॥
देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्व्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ६ ॥
एकरात्रं वसन् विप्रः क्षत्रियश्चातिथिः स्मृतः ।
अनित्या हि स्थिति र्यस्मात्तस्मादतिथिरुच्यते ॥ ७ ॥
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ ।
भोजयेत् सह भृत्यै स्तावानृशंस्यं प्रदर्शयन् ॥ ८ ॥

---

(१) कपुस्तके नास्ति ।

स्वदारनिरतो नित्यं परदारविवर्ज्जितः।
कृतहोमस्तु भुञ्जीत सायंप्रातरुदारधीः ॥ ९ ॥
सर्व्वतः प्रतिगृह्णीयादवृत्त्या कर्षितो द्विजः।
न भवेद्दोषभाक् तेन ज्वलनार्कसमो हि सः ॥ १० ॥
भूतानां रक्षणं दानमिज्याध्ययनमेव च।
शिवार्च्चनं क्षत्रियाणां तथा नारायणार्च्चनम् ॥ ११ ॥
नित्योद्युक्तो दस्युवधे रणे कुर्य्यात् पराक्रमम्।
नास्य कृत्यतमं किञ्चित् राज्ञो दस्युविनिग्रहात् ॥ १२ ॥
चाटभाटतस्करेभ्यो महासाहसिकादिभिः।
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः ॥ १३ ॥
सम्मानदानसत्कारैः वैदिकान् वासयेत् सदा।
राजन्यो धर्म्मकृत्यञ्च कुर्य्यादेव प्रयत्नतः ॥ १४ ॥
पण्डितं नीतिशास्त्रज्ञं नित्यञ्च प्रतिपालयेत्।
नियोजयेत् सभामध्ये नित्यं सद्भिश्च संयुतः ॥ १५ ॥
संविशेत् तूर्य्यघोषेण प्रतिबुध्येत्तथैव च।
शास्त्राणि चिन्तयेद्बुद्ध्या सर्व्वकर्त्तव्यतां तथा ॥ १६ ॥
दृष्ट्वा ज्योतिर्व्विदो वैद्यान् दद्यात् गां काञ्चनं महीम्।
निवेशिकानि च तथा श्रोत्रियाणां गृहानि च ॥ १७ ॥
य एव धर्म्मो नृपतेः स्वराष्ट्रप्रतिपालने।
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ १८ ॥
देवब्राह्मणभक्तश्च पितृकार्य्यपरायणः।
स्वभार्य्यानिरतो नित्यं षड्भागार्हः सदा नृपः ॥ १९ ॥

एकांशेन बलं धार्य्यं दानमंशद्वयेन च।
एकांशेन प्रकृतय एकांशेनाधिकारिणः॥ २०॥
एकांशेनात्मभोगश्च कुटुम्बादिप्रपालनम्।
आयस्यैवं षड़्विभागै र्व्ययं कुर्य्यान्महीपतिः॥ २१॥
सन्ध्यामुपास्य कुरुते गीतं वाद्यं मनोहरम्।
नृत्यगीतैश्च जग्धीं वा स्त्रीभिर्निशि सुखावहाम्॥ २२॥
गोरक्षां कृषिवाणिज्यं कुर्य्याद्वैश्यो यथाविधि।
दानं देयं यथाशक्त्या ब्राह्मणानाञ्च भोजनम्॥ २३॥
दम्भमोहविनिर्म्मुक्तस्तथा वागनसूयकः।
स्वदारनिरतो दान्तः परदारविवर्ज्जितः॥ २४॥
धनैर्विप्रान् भोजयित्वा यज्ञकाले तु याजकान्।
अप्रभुत्वञ्च वर्त्तेत धर्म्मंष्वादेहपातनात्॥ २५॥
यज्ञाध्ययनदानानि कुर्य्यान्नित्यमतन्द्रितः।
पितृकार्य्यपरश्चैव विष्णुशिवार्च्चनापरः॥ २६॥
वर्णत्रयस्य शुश्रूषां कुर्य्याच्छूद्रः प्रयत्नतः।
दासवद्ब्राह्मणानां च विशेषेण समाचरेत्॥ २७॥
अयाचितप्रदाता स्यात् कृषिं वृत्त्यर्थमाश्रयेत्।
शुद्रा तु वृत्तिस्तस्यैव कारु-चारण-कर्म्म च॥ २८॥
पाकयज्ञविधानेन यजेद्देवानतन्द्रितः।
तस्य तु द्विजशुश्रूषा परो धर्म्मः प्रकीर्त्तितः॥ २९॥
धारणं जीर्णवस्त्रस्य विप्रस्योच्छिष्टभोजनम्।
स्वदारेषु रतिश्चैव परदारविवर्ज्जनम्॥ ३०॥

लवणं मधुतैलं च दधि तक्रं घृतं पयः।
न दुष्येच्छूद्रजातीनां कुर्य्यात् सर्व्वस्य विक्रयम्॥ ३१॥
क्रियाभेदैस्तु सर्व्वेषां भृतिवृत्तिरनिन्दिता।
सीरभेदैः कृषिः प्रोक्ता मन्वाद्यैर्ब्राह्मणादिषु॥ ३२॥
ब्राह्मणैः षोडशगवं चतुरूनं तथापरैः।
द्विगवं वान्त्यजैः सीरं दृष्ट्वा भूमार्द्दवं तथा॥ ३३॥
भूमिं भित्वौषधिं छित्वा हत्वा कीटपिपीलिकाम्।
पुनन्ति खलु यज्ञेन कर्षका देवपूजनात्॥ ३४॥
वैदिकैः कर्म्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्य्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥ ३५॥
गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा।
तुर्य्येऽष्टमे वा सीमन्तो जनने जातकर्म्म च॥ ३६॥
निष्क्रमस्तृतीयमासि नाम व्युष्टे शताहनि।
षष्ठेऽन्नप्राशनं चूड़ा जन्मब्दे वा यथाकुलम्॥ ३७॥
कर्णवेधो व्रतादेशो वेदारम्भः क्रियाविधिः।
केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः॥ ३८॥
त्रेताग्निसंग्रहश्चेति संस्काराः षोड़श स्मृताः।
नवैताः कर्णवेधान्ता मन्त्रवर्ज्जं क्रिया स्त्रियाः॥ ३९॥
विप्रो गर्भाष्टमे वर्षे चत्र एकादशे तथा।
द्वादशे वैश्यजातिस्तु व्रतोपनयमर्हति॥ ४०॥
तस्य प्राप्तव्रतस्यायं कालः स्याद्द्विगुणाधिकः।
वेदव्रतच्युतो व्रात्यः स व्रात्यस्तोममर्हति॥ ४१॥

ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥ ४२॥
एते धर्म्मास्तु चत्वारः पूर्व्वं विप्रे प्रकीर्त्तिताः।
गान्धर्व्वो राक्षसश्चैव क्षत्रियस्य प्रशस्यते॥ ४३॥
अप्रार्थितः प्रयत्नेन ब्राह्मस्तु परिकीर्त्तितः।
प्रार्थितार्थप्रदानेन प्राजापत्यः प्रकीर्त्तितः॥ ४४॥
आसुरो द्रविणादानात् गान्धर्व्वः समयान्मिथः।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात्॥ ४५॥
तिस्रस्तु भार्य्याः क्षत्रस्य भार्य्यैका ब्राह्मणस्य तु।
एकैव भार्य्या वैश्यस्य शूद्रस्य च विधीयते॥ ४६॥
क्षत्रिया वैश्या शूद्रा च क्षत्रियस्य प्रकीर्त्तिता।
एकैव भार्य्या विप्रस्य ब्राह्मणी तु विधीयते॥ ४७॥
वैश्यैव भार्य्या वैश्यस्य शूद्रा शूद्रस्य कीर्त्तिता।
ब्राह्मणो नोद्वहेत् कन्यामसवर्णां कदाचन॥ ४८॥
ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो यो व्यजायत।
स तु शूद्रत्वमापन्नो विवहेन्न ततो विशाम्॥ ४९॥
शूद्राभार्य्यस्य पातित्यं राजन्यस्य यदुच्यते।
नैतन्मम मतं ज्ञेयं सा तेनोन्नीयते यतः॥ ५०॥
पतेत् विप्रश्च वैश्यश्च शूद्रां कन्यामुदावहन्।
पातित्यं नास्ति क्षत्रस्य शूद्रदारोपसंग्रहात्॥ ५१॥
विप्रकन्याविवाहोऽपि कृतो राजर्षिभिः पुरा।
तेजीयसां न दोषाय वह्नेः सर्व्वभुजो यथा॥ ५२॥

राजा नो नावमन्तव्यो नृबुद्ध्या मनुरब्रवीत्।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ५३ ॥
अनुष्ठितन्तु यद्देवैर्मुनिभिर्यदनुष्ठितम्।
नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म्म समाचरेत् ॥ ५४ ॥
ऊढायां हि सवर्णायामविप्रां काममुद्वहेत्।
तस्यामुत्पादितः पुत्रो न सवर्णात् प्रहीयते ॥ ५५ ॥
क्षत्राज्जातः क्षत्रियायां क्षत्रियः स्यात् न संशयः।
वैश्यायां च तथैव स्यात् शूद्रायामपि चैव हि ॥ ५६ ॥
यावन्न विन्दते जायां तावदर्द्धो भवेत्पुमान्।
नार्द्धं प्रजायते सर्व्वं प्रजायेत इति श्रुतिः ॥ ५७ ॥
सकामायान्तु कन्यायां सङ्गमे नास्त्यतिक्रमः।
किन्त्वलंकृत्य सत्कृत्य स एवैनां समुद्वहेत् ॥ ५८ ॥
सवर्णामुद्वहेत् भार्य्यां प्रथमं धर्म्मसिद्धये।
ततोऽह्यप्रतिलोमेन यथाकामं वहेन्नृपः ॥ ५९ ॥
विषाद्यथामृतं ग्राह्यममेध्यात् काञ्चनं यथा।
नीचाद्यथोत्तमा विद्या स्त्रीरत्नं दुष्कुलात्तथा ॥ ६० ॥
[1]स्त्रियोरत्नान्यथो विद्या धर्म्मः शौचं सुभाषितम्।
विविधानि च शिल्पानि समादेयानि सर्व्वतः ॥ ६१ ॥
यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्व्वास्तत्राफलाः क्रियाः ॥ ६२ ॥

---

(१) अयं श्लोकः ख पुस्तके नास्ति।

प्रजनार्थं महाभागा पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥ ६३ ॥
उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्री निबन्धनम् ॥ ६४ ॥
अपत्यं दारकर्म्माणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च वै ॥ ६५ ॥

इति बल्लालचरिते व्यासपुराणे वर्णधर्म्मादिकीर्त्तनं
[1]नाम त्रयोदशोऽध्यायः ।

(१) ख, उत्तरखण्डे भट्टप्रोक्ते इत्यधिकः पाठः ।

# अथ चतुर्द्दशोऽध्यायः[१]।

## व्यास उवाच।

शस्ता स्त्री चारुसर्व्वाङ्गी मत्तमातङ्गगामिनी।
गुरूरुजघना या च कृष्णसारमृगेक्षणा॥ १॥
सुनीलकेशी तन्वङ्गी विलोमाङ्गी मनोहरा।
समभूमिस्पृशौ पादौ संहतौ च तथा स्तनौ॥ २॥
नाभिः प्रदक्षिणावर्त्ता गुह्यमश्वत्थपत्रवत्।
गुल्फौ निगूढौ मध्येन नाभिरङ्गुष्ठमानिका॥ ३॥
गण्डैर्मधूकपुष्पाभैर्न शिराला न लोमशा।
न संहतभ्रूकुटिला पतिप्राणा पतिप्रिया॥ ४॥
बाला खेलनकैः काले दत्तैर्दिव्यफलाशनैः
मोदते युवती वस्त्रालङ्कारालिङ्गनादिभिः॥ ५॥
हृष्येन्मध्यवयाः प्रौढ़ा रतक्रीड़ासु कौशलैः।
वृद्धा तु मधुरालापैर्गौरवेण च युज्यते॥ ६॥
षोड़शाब्दा भवेद्बाला त्रिंशताद्भूतयौवना।
पञ्च पञ्चाशता प्रौढा वृद्धा स्त्री तदनन्तरम्॥ ७॥
कामाधीना एव नार्य्यस्तदर्थं रत्नसंग्रहः।
सेव्यास्ता नातिसेव्याश्च भूभुजा विषयैषिणा॥ ८॥

---

(१) क पुस्तके नास्ति।

स्त्रियां षोड़शवर्षायां चतुर्व्विंशतिहायन: ।
बुद्धिमानुद्यमं कुर्य्याद्विशिष्टसुखकाङ्क्षया ॥ ९ ॥
तथा पूर्णाङ्गवीर्य्यौ तौ पुत्रं जनयत: परम् ।
सर्व्वेन्द्रियसमायुक्तं बलवन्तं शतायुषम् ॥ १० ॥
निदाघशरदोर्ब्बाला हिता विषयिणी मता ।
तरुणी शीतसमये मध्या वर्षावसन्तयो: ॥ ११ ॥
नित्यं बाला सेव्यमाना नित्यं वर्द्धयते बलम् ।
युवती ह्रासयेच्छक्तिं मध्योद्भावयते जराम् ॥ १२ ॥
सद्यो मांसं च शाल्यन्नं बालास्त्रीसेवनं घृतम् ।
क्षीरमुष्णोदके स्नानं सद्य: प्राणकराणि षट् ॥ १३ ॥
सेवेत कामत: कामी बलात् वाजीकृतो हिमे ।
प्रकामं तु निषेवेत सुरतं शिशिरागमे ॥ १४ ॥
शीते रात्रौ दिने ग्रीष्मे वसन्ते च दिवानिशि ।
वर्षायामम्बुदध्वाने काले शरदि सस्मर: ॥ १५ ॥
अभिकाम: समुल्लास्य पूर्व्वमालिङ्गनादिभि: ।
समेयात् प्रमदां युक्त्या वाजीकरणवृंहित: ॥ १६ ॥
नित्यमुष्णाम्भसा स्नानं पय:पानं नवा स्त्रिय: ।
राजान: पथ्यमेतद्व: सुस्निग्धमल्पभोजनम् ॥ १७ ॥
कपित्थचूर्णयोगेन तथा दध्ना स्रजा[1] तथा ।
घृतं सुगन्धि भवति दुग्धै: छिन्नैस्तथा यवै: ॥ १८ ॥

---

(१) स्रजा ?

भोज्यस्य कल्पनैवं स्याद्गन्धयुक्तिः प्रदर्श्यते।
शौचमाचमनं सम्यक् तथैव च विरेचनम्॥ १९॥
भावना चैव पाकश्च बोधनं धूपनं तथा।
वासनञ्चैव निर्द्दिष्टं कर्म्माष्टकमिदं स्मृतम्॥ २०॥
कपित्थविल्वजम्ब्वाम्र-करवीरक-पल्लवैः।
कृत्वोदकन्तु यद्द्रव्यं शौचितं शौचनन्तु तत्॥ २१॥
तेषामभावे शौचन्तु मृगदर्पाम्भसा भवेत्।
नखं कुष्ठं घनं मांसं स्पृक्का शैलेयजं जलम्॥ २२॥
तथैव कुङ्कुमं लाक्षा चन्दनागुरुनीरदम्।
सरलं देवकाष्ठञ्च कर्पूरं कान्तया सह॥ २३॥
बाला कुन्दुरकश्चैव गुग्गुलुः श्रीनिवासकः।
सह सर्ज्जरसेनैवं धूपद्रव्यैकविंशतिः॥ २४॥
धूपद्रव्यगणादस्मादेकविंशाद्यथेच्छया।
द्वे द्वे द्रव्ये समादाय सर्ज्जभागैर्नियोजयेत्॥ २५॥
नखपिण्याकमलयैः संयोज्य मधुना तथा।
धूपयोगा भवन्तीह यथावत् स्वेच्छया कृताः॥ २६॥
त्वचं नाड़ीं फलं तैलं कुङ्कुमं ग्रन्थिपर्णकम्।
शैलेयं तगरं कान्ताम् चोलकर्पूरमेव च॥ २७॥
मांसीं मुराञ्च कुष्ठञ्च स्नानद्रव्याणि निर्द्दिशेत्।
एतेभ्यस्तु समादाय द्रव्यत्रयमथेच्छया।
मृगदर्पयुतं स्नानं कार्य्यं कन्दर्पवर्द्धनम्॥ २८॥

त्वङ्मुरानलदैस्तुल्यैर्वासकार्द्धसमायुतैः।
स्नानमुत्पलगन्धि स्यात् सतैलं कुङ्कुमायते ॥ २९ ॥
जातिपुष्पसुगन्धि स्यात् तगरार्द्धेन योजितम्।
सद्वासकं स्याद्दकुलैस्तुल्यगन्धि मनोहरम् ॥ ३० ॥
मञ्जिष्ठा तगरं चोलं त्वचं व्याघ्रनखं नखम्।
गन्धपत्रञ्च विन्यस्य गन्धतैलं भवेच्छुभम् ॥ ३१ ॥
मल्लीभिर्गन्धितात् तैलं तिलात् स्यात् प्रमदाप्रियम्।
तैलं निपीड़ितं घानौ तिलैः पुष्पाधिवासितैः।
वासनात् पुष्पसदृशं गन्धेन तु भवेद्ध्रुवम् ॥ ३२ ॥
एला-लवङ्ग-कक्कोल-जातीफल-निशाकराः।
जातिपत्रिकया सार्द्धं स्वतन्त्रा मुखवासकाः ॥ ३३ ॥
कर्पूरं कुङ्कुमं कान्ता मृगदर्पं हरेणुकम्।
कक्कोलैलालवङ्गञ्च जाती कोशकमेव च ॥ ३४ ॥
त्वक्पत्रं त्रुटिमुस्तौ च लतां कस्तुरिकं तथा।
कण्टकानि लवङ्गस्य फलपत्रे च जातितः ॥ ३५ ॥
कुटकञ्च फलं गृह्य कार्षिकाण्युपकल्पयेत्।
तच्चूर्णे खदिरं सारं दद्यात्तुर्य्यन्तु वासितम् ॥ ३६ ॥
सहकाररसेनास्मात् कर्त्तव्या गुटिकाः शुभाः।
मुखे न्यस्ता सुगन्धास्ता मुखरोगविनाशकाः ॥ ३७ ॥
पूगं प्रक्षालितं सम्यक् पञ्चपल्लववारिणा।
शक्तया तु गुटिका द्रव्यैर्वासितं मुखवासकम् ॥ ३८ ॥

कटुकं दण्डकाष्ठञ्च गोमूत्रवासितं त्र्यहम् ।
क्षतञ्च पूगवत् सम्यक् मुखसौगन्धिकारकम् ॥ ३९ ॥
त्वक्पथ्ययोः समावंशौ शशिभागार्द्धसंयुतौ ।
नागवल्लीसमो भाति मुखवासो मनोहरः ॥ ४० ॥
एवं कुर्य्यात् सदा स्त्रीणां रक्षणं पृथिवीपतिः ।
न चासां विश्वसेज्जातु पुत्रमातुर्व्विशेषतः ॥ ४१ ॥

इति बल्लालचरिते[1] व्यासपुराणे स्त्रीलक्षणादिकीर्त्तनं[2] नाम चतुर्द्दशोऽध्यायः ।

---

(१) ख, उत्तरखण्डे भट्टप्रोक्ते इत्यधिकः पाठः ।
(२) ख, ॰ कामशास्त्रम् ।

## अथ पञ्चदशोऽध्यायः[1] ।

व्यास उवाच ।

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौयुगे ॥ १ ॥
दानधर्म्मात् परो धर्म्मो भूतानां नेह विद्यते ।
स्वर्गायुर्भूतिकामेन देयं पापोपशान्तये ॥ २ ॥
न दानादधिकं किञ्चिद्दृश्यते भुवनत्रये ।
दानेन प्राप्यते स्वर्गः श्री दानेनैव लभ्यते ॥ ३ ॥
दानेन शत्रुञ्जयति व्याधिर्दानेन नश्यति ।
दानेन लभ्यते विद्या दानेन युवतीजनः ॥ ४ ॥
दानेन भोगानाप्नोति दानेनायुश्च विन्दति ।
धर्म्मार्थकाममोक्षाणां साधनं परमं स्मृतम् ॥ ५ ॥
दद्यात् पूर्व्वमुखो दानं गृह्णीयादुत्तरामुखः ।
आयुर्व्विवर्द्धते दातुर्गृहीतुः क्षीयते न तत् ॥ ६ ॥
मातुः शतगुणं दानं सहस्रं पितुरुच्यते ।
अनन्तं दुहितुर्दानं सोदर्य्ये दत्तमक्षयम् ॥ ७ ॥
अमनुष्ये समं दानं पापे ज्ञेयं महाफलम् ।
वर्णसङ्करे द्विगुणं शूद्रे दानं चतुर्गुणम् ॥ ८ ॥

---

(१) कपुस्तके नास्ति ।

वैश्ये चाष्टगुणं चत्रे षोड़शत्वं द्विजब्रुवे।
वेदाध्याये शतगुणमनन्तं वेदबोधके ॥ ९ ॥
गुरौ पुरोहितादौ च दानमक्षयमुच्यते।
श्रीविहीनेषु यद्दत्तन्तदनन्तञ्च यज्वनि ॥ १० ॥
अभयं सर्व्वदैवत्यं भूमि र्वै विष्णुदेवता।
कन्या दासास्तथा दासी प्राजापत्याः प्रकीर्त्तिताः ॥ ११ ॥
प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः।
तथा चैकशफाः सर्व्वे याम्यश्च महिषस्तथा ॥ १२ ॥
उष्ट्रश्च नैर्ऋतो धेनू रौद्रीछागोनलस्तथा।
आप्यो मेषो हरिः क्रोड़ः आरण्याः पशवो निलाः ॥ १३ ॥
जलाशयं वारुणं स्यात् वारिधानी घटादयः।
समुद्रजानि रत्नानि हेमलौहानि चानलः ॥ १४ ॥
प्राजापत्यानि शस्यानि पक्कान्नमपि पार्थिवाः।
गान्धर्व्वं गन्धमित्याहु र्वस्त्रं वार्हस्पतं स्मृतम् ॥ १५ ॥
वायव्याः पक्षिणः सर्व्वे विद्या ब्राह्मी तथाङ्गकम्।
सारस्वतं पुस्तकादि विश्वकर्म्मा तु शिल्पके ॥ १६ ॥
वनस्पतिर्द्रुमादीनां द्रव्यदेवा हरेस्तनुः।
छत्रं कृष्णाजिनं शय्या रथ आसनमेव च ॥ १७ ॥
उपानह्णौ तथा यानमष्टावाङ्गिर ईरितम्।
रथोपकरणं शस्त्रं ध्वजाद्यं सर्व्वदैवतम् ॥ १८ ॥
गृहञ्च सर्व्वदैवत्यं सर्व्वेषां विष्णुदेवता।
शिवो वा न ततो द्रव्यं व्यतिरिक्तं यतोऽस्ति हि ॥ १९ ॥

শৃণুতাহং প্রবক্ষ্যামি মহাদানানি ষোড়শ ॥ ২০ ॥
তুলাপুরুষ আদ্যন্তু হিরণ্যগর্ভদানকম্।
ব্রহ্মাণ্ডং কল্পবৃক্ষঞ্চ গোসহস্রঞ্চ পঞ্চমম্ ॥ ২১ ॥
হিরণ্যকামধেনুঞ্চ হিরণ্যাশ্বঞ্চ সপ্তমম্।
হিরণ্যাশ্বরথস্তদ্বদ্ধেমহস্তিরথস্তথা ॥ ২২ ॥
পঞ্চলাঙ্গলকং তদ্বদ্ধরাদানং মহাফলম্।
দ্বাদশং বিষ্ণুচক্রঞ্চ ততঃ কল্পলতাত্মকম্ ॥ ২৩ ॥
সপ্তসাগরদানঞ্চ রত্নধেনুস্তথৈব চ।
মহাভূতঘটস্তদ্বৎ দানং শুভদিনেঽর্পয়েৎ ॥ ২৪ ॥
মণ্ডপে মণ্ডলে দানং দেবান্ প্রার্চ্চ্যার্পয়েদ্দ্বিজে।
দ্রব্যস্য নাম গৃহ্ণীয়াৎ দদানি চ তথা বদেৎ ॥ ২৫ ॥
তোয়ং দদ্যাত্ততো হস্তে দানে বিধিরয়ং স্মৃতঃ।
মনসা পাত্রমুদ্দিশ্য জলং ভূমৌ বিনিক্ষিপেৎ ॥ ২৬ ॥
বিদ্যতে সাগরস্যান্তো দানস্যান্তো ন বিদ্যতে ॥ ২৭ ॥
যথানাম সগোত্রায় প্রবরায়ামুকায় চ।
বেদবেদাঙ্গযুক্তায় পাত্রায় সুমহাত্মনে ॥ ২৮ ॥
মাতাপিত্রোরাত্মনশ্চ পুণ্যযশোভিবৃদ্ধয়ে।
সর্ব্বপাপোপশান্ত্যর্থং স্বর্গার্থং ভুক্তিমুক্তয়ে ॥ ২৯ ॥
যথানাম মহাদ্রব্যং বিষ্ণুরুদ্রাদিদৈবতম্।
এতত্তুভ্যং সম্প্রদদে প্রীয়তাং মে হরিঃ শিবঃ ॥ ৩০ ॥
এতদ্দানপ্রতিষ্ঠার্থং সুবর্ণং দক্ষিণাং দদে।
অনেন দানবাক্যেন সর্ব্বদানানি বৈ দদেৎ ॥ ৩১ ॥

सुवर्णे दीयमाने तु रजतं दक्षिणेष्यते ।
अन्येषामपि दानानां सुवर्णं दक्षिणा स्मृता ॥ ३२ ॥
सुवर्णं रजतं ताम्रं तण्डुलं धान्यमेव च ।
नित्यश्राद्धं देवपूजा सर्व्वमेतददक्षिणम् ॥ ३३ ॥
रजतं दक्षिणा पित्र्ये धर्म्मकामार्थसाधनम् ।
सुवर्णं रजतं ताम्रं मणिमुक्तावसूनि च ॥ ३४ ॥
सर्व्वमेतत् महाप्राज्ञे ददाति वसुधां ददत् ।
पितॄंश्च पितृलोकस्थान्देवस्थाने च देवता ॥ ३५ ॥
सन्तर्पयति शान्तात्मा यो ददाति वसुन्धराम् ।
खर्व्वटं खेटकं वापि ग्रामं वा शस्यशालिनम् ॥ ३६ ॥
निवर्त्तनशतं वापि तदर्द्धं वा गृहादिकम् ।
अप्याढावापमात्रं वा दत्त्वोर्व्वीं फलभाक् भवेत् ॥ ३७ ॥
इक्षुभिः सन्ततां भूमिं यवगोधूमशालिनीम् ।
ददाति वेदविदुषे स न भूयोभिजायते ॥ ३८ ॥
फालकृष्टां महीं दत्त्वा सवृक्षां शस्यशालिनीम् ।
यावत् सूर्य्यकरालोकास्तावत् स्वर्गे महीयते ॥ ३९ ॥

विप्राय दद्याच्च गुणान्विताय
तपोभियुक्ताय जितेन्द्रियाय ।
यावन्मही तिष्ठति सागरान्ता
तावत् फलं तस्य भवेदनन्तम् ॥ ४० ॥

यथा वीजानि रोहन्ति प्रकीर्णानि महीतले ।
एवं कामाः प्ररोहन्ति भूमिदानसमार्ज्जिताः ॥ ४१ ॥

यथाप्सु पतितः सद्यस्तैलविन्दुः प्रसर्पति।
एवं भूमिकृतं दानं शस्ये शस्ये प्ररोहति ॥ ४२ ॥
अन्नदाः सुखिनो नित्यं वस्त्रदश्चैव रूपवान्।
स नरः सर्व्वदो भूपा यो ददाति वसुन्धराम् ॥ ४३ ॥
यथा गौर्भरते वत्सं चीरमुत्सृज्य चीरिणी।
एवं दत्ता महीपाला भूमिर्भरति भूमिदम् ॥ ४४ ॥
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः।
शूलपाणिश्च भगवानभिनन्दति भूमिदम् ॥ ४५ ॥
आस्फोटयन्ति पितरो वर्णयन्ति पितामहाः।
भूमिदाता कुले जातः स नस्त्राता भविष्यति ॥ ४६ ॥
बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ ४७ ॥
भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति।
उभौ तौ पुण्यकर्म्माणौ नियतौ स्वर्गगामिणौ ॥ ४८ ॥
दद्याद्भूमिं निबन्धं वा कृत्वा लेख्यञ्च कारयेत्।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥ ४९ ॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम्।
अभिलेख्यात्मनो वंशानात्मानञ्च महीपतिः ॥ ५० ॥
प्रतिग्रहपरिच्छेददानाच्छेदोपवर्णनम्।
स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम् ॥ ५१ ॥
सुवर्णदानं गोदानं भूमिदानञ्च पार्थिवाः।
एतत् प्रयच्छमानस्तु सर्व्वपापैः प्रमुच्यते ॥ ५२ ॥

अग्नेरपत्यं प्रथमं सुवर्णम्
भूर्वैष्णवी सूर्य्यसुताश्च गावः।
यः काञ्चनं गाञ्च महीञ्च दद्यात्
दत्तास्त्रयस्तेन भवन्ति लोकाः॥ ५३॥

यस्तटाकं नवं कुर्य्यात् पुराणं वापि खानयेत्।
स सर्व्वं कुलमुद्धृत्य स्वर्गे लोके महीयते॥ ५४॥
कृत्वापि पापकर्म्माणि यो दद्यादन्नमर्थिने।
ब्राह्मणाय विशेषेण स पापेन न लिप्यते॥ ५५॥
त्रिसप्तकुलमुद्धृत्य कन्यादो ब्रह्मलोकभाक्।
देवालयञ्च प्रतिमां कारयन् सर्व्वमाप्नुयात्॥ ५६॥
दासीदस्तु द्विजेन्द्रेभ्यो ह्यप्सरोलोकमाप्नुयात्।
तस्य शिश्नेन्द्रियं भूपा नाग्निर्दहति कर्हिचित्॥ ५७॥

सिंहगिरिरुवाच।

स्वालङ्कृता वसनभूषणगन्धपुष्पैः
कैशोर्य्यरूपकमनीयवपुःसुभोग्याः[1]।
दासीः प्रदाय बहुशो द्विजसत्तमेभ्यः
श्रीलादिशूरनृपतीरमतेऽप्सरोभिः॥ ५८॥

इति वल्लालचरिते[2] व्यासपुराणे दानमाहात्म्यादिकीर्त्तनं
नाम पञ्चदशोऽध्यायः।

---

(१) ख, नव्या हिमांशुवदना रहकर्म्मदक्षाः।
(२) उत्तरखण्डे भट्टप्रोक्ते इति ख पुस्तकेऽधिकः पाठः।

## अथ षोड़शोऽध्यायः[1]।

व्यास उवाच।

उपाध्यायः पिता ज्येष्ठभ्राता चैव महीपतिः।
मातुलः श्वशुरस्त्राता मातामहपितामहौ॥ १॥
बन्धुर्ज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः।
माता मातामही चैव पितृमातृष्वसादयः॥ २॥
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियः।
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो नृपाः।
अनुवर्त्तनमेतेषां मनोवाक्कायकर्म्मभिः॥ ३॥
गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः।
नैतैरुपविशेत् सार्द्धं विवदेत् नात्मकारणात्॥ ४॥
जीवितार्थमपि द्वेषात् गुरुभिर्नैव भाषणम्।
उदितोऽपि गुणैरन्यै र्गुरुद्वेषी पतत्यधः॥ ५॥
गुरूणाञ्चैव सर्व्वेषां पूज्याः पञ्च प्रयत्नतः।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषु माता गरीयसी॥ ६॥
यो भावयति या सूते येन विद्योपदिश्यते।
ज्येष्ठभ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः॥ ७॥
आत्मनः सर्व्वयत्नेन प्राणत्यागेन वा पुनः।

---

(१) कपुस्तके नास्ति।

पूजनीया विशेषेण पश्चैते भूतिमिच्छता ।
नास्ति पितृसमो देवो नास्ति मातृसमो गुरुः ॥ ८ ॥
तयोर्नित्यं प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा ।
न ताभ्यामननुज्ञातो धर्म्ममन्यं समाश्रयेत् ॥ ९ ॥
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्व्वत्राभ्यागतो गुरुः ॥ १० ॥
ब्राह्मणं प्रणमेद् यस्तु विष्णुबुद्ध्या नरोत्तमः ।
आयुः पुत्रश्च कीर्त्तिश्च सम्पत्तिस्तस्य वर्द्धते ॥ ११ ॥
दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः ।
विप्रा हि क्षत्रियात्मानो नावज्ञेयाः कदाचन ॥ १२ ॥
धर्म्मशास्त्ररथारूढ़ा वेदखड्गधरा द्विजाः ।
क्रीड़ार्थमपि यद्ब्रूयुः स धर्म्मः परमः स्मृतः ॥ १३ ॥

इति वल्लालचरिते[1] व्यासपुराणे गुरुवर्ग-कीर्त्तनं
नाम षोड़शोऽध्यायः ।

---

(१) ख. उत्तरखण्डे भट्टप्रोक्ते इत्यधिकः पाठः ।

## अथ सप्तदशोऽध्यायः[1] ।

व्यास उवाच ।

मानव्यश्च काश्यपश्च काङ्कायन[2]-रङ्गणौ ।
भरद्वाजो गौतमश्च कल्विषश्च सुकालिनः ॥ १ ॥
आर्ष्टिषेणोऽग्निवेशश्च कृष्णात्रेयवशिष्ठकौ ।
विश्वामित्रो गालवश्च चन्द्रात्रेयश्च कौशिकः ॥ २ ॥
घृतकौशिक-मौद्गल्यौ लाभायन-पराशरौ ।
सौपायनात्रिकुहलाः वासुकी रोहितस्तथा ॥ ३ ॥
वार्ध्यश्वो वैयाघ्रपद्यो दर्भःशालावतः कपिः ।
जमदग्निः काञ्चनश्च कात्यायन-बृहस्पती ॥ ४ ॥
विष्णुवृद्धश्च साङ्कृत्यो गर्गः कौण्डिन्य-बंधुलौ ।
सावर्णाङ्गिरसौ मौनः कौश्यो यौगन-जैमिनी ॥ ५ ॥
शक्तिः कात्यायनो वात्स्यौ लोगाक्षिः शुनकस्तथा ।
अगस्तिः सोमराजश्च सन्दानो माधवो भृगुः ॥ ६ ॥
मैत्रायणिश्च शाण्डिल्य उपमन्युर्धनञ्जयः ।
मधुकुल्यो हारितश्च विदलो गोभिलस्तथा ॥ ७ ॥
कास्कायनश्च यास्कश्च वार्ष्णेयो ब्रह्मचत्रकः ।
युवनाश्वश्च वैण्यश्च जातूकर्णोऽघमर्षणः ॥ ८ ॥

---

(१) कपुस्तके नास्ति ।

(२) उभयत्रापि आदर्शपुस्तकद्वये काङ्कायनेत्यस्ति तेनैकः कास्कायनः कृतः ।

अम्बरीष दृध्मवाह्णो लौहित्य इन्द्रकौशिकः।
अजश्च निध्रुवो रेभ ऋषयो गोत्रकारकाः॥ ९॥

इति वल्लालचरिते[1] व्यासपुराणे गोत्रकीर्त्तनं
नाम सप्तदशोऽध्यायः।

---

(१) ख, उत्तरखण्डे भट्टप्रोक्ते इत्यधिकः पाठः।

# अथाष्टादशोऽध्यायः[1] ।

राजर्षय ऊचुः ।

ब्राह्मणानां क्षत्रियाणां वैश्यानाञ्चान्त्यजन्मनाम् ।
भेदान् ब्रूहि महाप्राज्ञ श्रोतुं[2] कौतुहलं परम् ॥ १ ॥

व्यास उवाच ।

सारस्वताः कान्यकुब्जाः गौड़ा मैथिलकोत्कलाः ।
पञ्च गौड़ा इति ख्याता विन्ध्यस्योत्तरवासिनः ॥ २ ॥
कर्णाटाश्चैव तैलङ्गा गुर्ज्जरा राष्ट्रवासिनः ।
अन्ध्राश्च द्राविड़ाः पञ्च विन्ध्यदक्षिणवासिनः ॥ ३ ॥
मगास्तु ब्राह्मणाः पूर्व्वं निःसृताः[3] सूर्य्यमण्डलात् ।
ज्वलदर्कप्रतीकाशाः शाकद्वीपमवातरन्[4] ॥ ४ ॥

इति ब्रह्मवर्गाः ।

पाण्डवाः पौरवा बौधाः सहस्रार्ज्जुनहैहयाः ।
चन्द्रात्रेय-कलचुरि-रट्ट-यादव-तोमराः ॥ ५ ॥
कौशिकाः कौकुराः कुश्या एते सौम्याः प्रकीर्त्तिताः ।
ऐक्ष्वाकवो निकुम्भाश्च मौर्य्याश्च सागरास्तथा ॥ ६ ॥

---

(१) कपुस्तके नास्ति ।

(२) ख, मुने श्रोतुमस्ति ।

(३) ख, निःसृत्य ।

(४) क, पुस्तके इदं श्लोकार्द्धं नास्ति तत्स्थाने वराहस्य तु धर्म्मेण माथुर
ज्ञायते तथा इत्यर्द्धमस्ति ।

तथा कच्छपघाताश्च राघवा गोभिलास्तथा।
तथा गाहड़वालाश्च एते सौराः प्रकीर्त्तिताः ॥ ७ ॥
चाहमानाश्च मल्लाश्च छिन्दाश्चापोत्कटास्तथा।
चौलूक्याश्च सिलाराश्च हूर्णाश्च ब्रह्मवाहुजाः ॥ ८ ॥
अग्निकुण्डसमुत्पन्नाः परमारा महाबलाः।
शालुकिकाः सेन्द्रकाश्च काद्रवेया इति स्मृताः ॥ ९ ॥
वेणाद्दे[1]ण्यः पृथु र्जातः पृथ्वीहारास्ततोऽभवन्।
वैनतेयास्तु तार्च्या वै पालास्तु क्षत्रियाधमाः ॥ १० ॥
इति क्षत्रियवर्गः।
उपकेशाश्च प्राक्वाटा रोहिताश्च महोत्सवाः।
माहिष्मत्याश्च वैशाल्याः कौशाम्ब्याः श्रावकास्तथा[2] ॥११॥
आयोध्यिकाश्च वणिजो गुर्ज्जरा भुवि विश्रुताः।
उजानिकाश्च धनिनः सुवर्णा वणिजाधमाः ॥ १२ ॥
जेजातुतीया वणिजश्चन्द्ररश्मिसमुद्भवाः[3] ॥ १३ ॥
इति वैश्यवर्गः।

इति वल्लालचरिते[4] व्यासपुराणे त्रैवर्णिकवर्गकीर्त्तनं नामाष्टादशोऽध्यायः।

---

(१) क, वेणो ; ख, वेणोर्।
(२) कपुस्तके, श्रावकाः वारणावताः।
(३) इदं श्लोकार्द्धं खपुस्तके नास्ति।
(४) ख, उत्तरखण्डे व्यासप्रोक्ते इत्यधिकः पाठः।

## अथोनविंशोऽध्यायः[1] ।

व्यास उवाच ।

सत्शूद्रश्चैव शूद्रश्च शूद्रस्तु द्विविधो मतः ।
आद्यो विप्रविशोः शूद्रां द्वितीयः पादजः स्मृतः[2] ॥ १ ॥
ब्राह्मणात् क्षत्रकन्यायां मौलो नाम प्रजायते ।
ब्राह्मणात् वैश्यकन्यायामम्बष्ठस्तनयः स्मृतः[3] ॥ २ ॥
अम्बष्ठाद्वैश्यकन्यायां वैद्यो नाम प्रजायते ।
शूद्रायां करणो वैश्यात् करणाश्च ततः पुनः ।
स्थितः करणकार्येषु ततः कायस्थ उच्यते ।
पादजाः सन्ति कायस्थास्तथैवाम्बष्ठजा अपि ।
ये तु किरातकायस्था ते सर्व्वे निन्दिताः स्मृता[4] ॥ ३ ॥
निगमश्च गन्धिकश्च वैश्यवंशसमुद्भवौ ।
शनैः शूद्रत्वमापन्नौ क्रियालोपादिहेतुना ॥ ४ ॥

---

(१) कपुस्तके नास्ति ।

(२) श्लोकोऽयं खपुस्तके नास्ति ।

(३) अयं श्लोकः क, पुस्तके नास्ति । अस्य स्थाने क्षत्रविट्शूद्रासु विप्रा-मौलकाम्बष्ठवंशजाः इति श्लोकार्द्धमस्ति ।

(४) अष्टचरणस्य तृतीयश्लोकस्य स्थाने क पुस्तके
शूद्रायां करणो वैश्यात् राजकार्ये स्थितस्तु सः ।
करणश्च किरातश्च कायस्थो द्विविधः स्मृतः ।
प्रथमः शूद्रकन्यायां द्वितीयः शूद्रवंशजः । इति षट्चरणः श्लोको वर्त्तते ।

रत्नकाराः स्वर्णकारा रूप्यकारलिपीकरौ।
ताम्रकारा लोहकाराः शङ्खकाराश्च तन्त्रिणः॥ ५॥
तण्डुलिनो व्यञ्जनिनः सत्शूद्राश्च प्रकीर्त्तिताः।
वैश्याद्रामकवैदेहौ ब्राह्मणीक्षत्रियासुतौ॥ ६॥
रामकात् क्षत्रकन्यायामुग्रो नाम प्रजायते।
ब्राह्मणादुग्रकन्यायामावृतो नाम जायते॥ ७॥
आभीरः शूद्रः शूद्रायां ब्रात्यक्षत्रविशोरपि।
वैश्याद्वैदेहकन्यायां कांसकारः प्रजायते॥ ८॥
वैश्यादम्बष्ठकन्यायां गोपगोपालकौ सुतौ।
जज्ञे वैदेहकन्यायां लेपकारस्तु रामकात्॥ ९॥
वैश्यायां जायते शूद्रात् तैलकार इति स्मृतः।
अम्बष्ठायां स्वर्णकारात् शौचिको नाम जायते॥ १०॥
विप्रः कुविन्दकन्यायां कृषिको नाम जायते।
कृषिकात्गोपकन्यायां ताम्बोलिरिति नःश्रुतम्॥ ११॥
वणिजः शूद्रकन्यायां कन्दुको नाम जायते।
कन्दुकाद्विप्रकन्यायां कलुपालो(१)व्यजायत॥ १२॥
शूद्रादायोगवो वैणश्चाण्डालश्चाधमो नृणाम्।
वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः॥ १३॥
कदाचिद्वीजमाहात्म्यात् क्षेत्रमाहात्म्यतः क्वचित्।
नीचोत्तमत्वं भवति श्रेष्ठत्वं क्षेत्रवीजतः॥ १४॥

(१) कल्लपालः।

कदाचिदानुलोम्येन जातिर्मात्समा स्मृता ।
कर्म्मणोत्तमनीचत्वं कालतश्च भवेद्गुणैः ॥ १६ ॥
जातो नार्य्यामनार्य्यायामार्य्यादार्य्योभवेद्गुणैः ।
अनार्य्याज्जात आर्य्यायामनार्य्य इति निश्चयः ॥ १७ ॥
अम्बष्ठायान्तु कृषिकाद्व्यजायन्त कुटुम्बिनः ।
कुटुम्बिनस्तु गोपाल्यां कुम्भकारो व्यजायत ॥ १८ ॥
करण्यां लोहकारात्तु वर्द्धकि र्नाम जायते ।
वर्द्धकेस्ताम्रकारिण्यां वारकि र्नाम जायते ॥ १९ ॥
कुम्भकारेण शूद्रायां जनितः पलगण्डकः ।
शूद्रात् कुम्भकारनार्य्यां मालाकारः प्रजायते ॥ २० ॥
क्रयक्रीतासु कन्यासु भवन्ति दासजातयः ।
ब्राह्मणाच्छूद्रकन्यायां नापितो नाम जायते ॥ २१ ॥
अजायन्त च चैत्रेषु हतानां मुखजन्मनाम् ।
शूद्रविट् चवैश्यचण्डालाः किराता[1]भरजातयः ॥ २२ ॥
किराता[2]ल्लोहकारिण्यां कर्म्मारः शस्त्रविक्रयी ।
ताम्रकुट्यां तन्तुवायात् पट्टकारः प्रजायते ॥ २३ ॥
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ।
कलुपालात्[3] कुविन्दायां शौण्डिकोनाम जायते ॥ २४ ॥

---

(१) क, देवला ।

(२) क, वृषलात् ।

(३) ख, कल्लपालात् ।

रङ्गाजीवस्तु शौण्डिक्यां सुतो वर्द्धकिसम्भवः ।
सङ्कराणान्तु साङ्कर्य्यासाङ्कर्य्याच्च पुनः पुनः ॥ २५ ॥
जात्यानन्त्यन्तु संप्राप्तं सर्व्वं वक्तुं न शक्यते ।
पौण्ड्राः सुह्माश्च पल्हाश्च पुलिन्दाश्च किनारयः ॥ २६ ॥
कोला भूषारा वरटास्तुर्कानाः शवराः शकाः ।
पारदा दरदा व्याधा निषादाः पुक्कशा अमी ॥ २७ ॥
म्लेच्छवाचश्चार्य्यवाचो दस्यवः षोड़श स्मृताः ॥ २८ ॥
रजकश्चर्म्मकारश्च नटो वरुड़ एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥ २९ ॥
अन्त्यजानां गृहे तोयं भाण्डे पर्य्युषितन्तु यत् ।
प्रायश्चित्तं यदा पीतं तदैव हि समाचरेत् ॥ ३० ॥

इति वल्लालचरिते[1] व्यासपुराणे शूद्रवर्गकथनं
नाम ऊनविंशोऽध्यायः ।

---

(१) ख, पुस्तके उत्तरखण्डे भट्टप्रोक्ते इत्यधिकः पाठः ।

# अथ विंशोऽध्यायः[1] ।

## व्यास उवाच ।

अतःपरं रुद्रगीता कथ्यते मनुजेश्वराः ।
शृणुतावहिता भूत्वा इमां गीतां सनातनीम्[2] ॥ १ ॥
नमस्ते मन्यवे रुद्र उतोत इषवे नमः ।
नमामि तव बाहुभ्यां गिरिशन्त गिरीश्वर ॥ २ ॥
रुद्रस्तेऽपापकाशिन्या शिवया घोररूपया ।
तन्वानोऽभि चाकशीहि सुखं शन्तमया शिव ॥ ३ ॥
यामिषुमस्तवे हस्ते गिरिशन्त बिभर्षि च ।
तां गिरित्र कुरु शिवां मा हिंसीः पुरुषं जगत् ॥ ४ ॥
शिवेन वचसाच्छ्त्वा वदामो गिरिश प्रभो ।
यथा यक्ष्मं सुमनसो जगत्सर्व्वमिदं भवेत् ॥ ५ ॥
अध्यवोचदधिवक्ता प्रथमो दैव्यको भिषक् ।
अहींश्च जम्भयन् सर्व्वान् यातुधानीः परासुव ॥ ६ ॥
असौ यस्ताम्र आदित्य उत बभ्रूः सुमङ्गलः ।
ये चैनं रुद्रा अभितो दिक्षेषां हेड़ईमहे ॥ ७ ॥
असाववसर्पति यो नीलग्रीवो विलोहितः ।
गोपाःस्त्रियोऽप्यदृश्रन् यं स दृष्टोमृड़याति नः ॥ ८ ॥

---

(१) कपुस्तके नास्ति ।

(२) श्लोकऽयं क पुस्तके नास्ति ।

नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे।
सत्त्वथो येऽस्य सत्वा नस्तेभ्योऽहमकरं नमः॥ ८॥
धन्वनस्त्वं प्रमुञ्चात्नर्यो रुभयोर्ज्यामुमाधव।
याश्च ते हस्त इषवो भगवन् ताः परा वप॥
कपर्द्दिनो धनुर्विज्यं विशल्यो वाणवानुत।
अनेशन्निषवश्चास्य चाभुरस्तु निषङ्गधीः॥ १०॥
या मीढुष्टम ते हेतिर्हस्ते प्रविद्यते धनुः।
अयक्ष्मन् या तयास्मान् त्वं विश्वतः परिपालय॥ ११॥
अस्मान् ते धन्वनो हेतिः परिवृणक्तु विश्वतः।
अथो यश्चेषुधी रुद्र अस्मदारे निधेहि तम्॥ १२॥
अवतत्य धनुः शल्यमुखानि विनिशीर्य्य च।
शतेषुधे सहस्राक्ष शिवो नः सुमना भव॥ १३॥
आयुधाय नमस्तेऽस्तु धृष्णवेऽनातताय च।
उभाभ्यामुत वाहुभ्यां नमस्तेऽस्तु च धन्वने॥ १४॥
मा नो महान्त मुत मा नो अर्भकम्
मा न उक्षन्तमुतमा न उक्षितम्।
मा नो वधीः पितरम्मोत मातरम्
मा नः प्रियास्तन्वो रुद्र रीरिषः॥ १५॥
मानस्तोके च तनये गवाश्वेषु च रीरिषः।
आयूंषि भामिनो वीरान् मावधीस्त्वां हवामहे॥ १६॥
सेनान्ये दिशाम् पतये नमो हिरण्यवाहवे।
वृक्षेभ्यो हरिकेशेभ्यः पशूनाम्पतये नमः॥ १७॥

शष्पिञ्जराय त्विषीमते पथीनाम्पतये नमः।
सूत्रिणे हरिकेशाय पुष्टानाम्पतये नमः॥ १८॥
वभ्लुशाय नमो व्याधिनेऽन्नानाम्पतये नमः।
भवस्य हेत्यै जगताम् पंतये च नमो नमः॥ १९॥
रुद्रायाततायिने च क्षेत्राणाम्पतये नमः।
नमोऽस्त्वहन्त्यै सूताय वनानाम्पतये नमः॥ २०॥
रोहिताय स्थपतये वृक्षाणाम्पतये नमः।
भुवन्तये नमस्तस्मै वरिवस्यकृताय च॥ २१॥
मन्त्रिणे वै वाणिजाय कक्षाणाम्पतये नमः।
घोषायोच्चैः क्रन्दयते पत्तीनाम्पतये नमः॥ २२॥
धावते कृत्स्नवीताय सत्वानाम्पतये नमः।
नमोऽस्तु सहमानाय नमो निव्याधिने नमः॥ २३॥
आव्याधिनीनाम्पतये ककुभाय निषङ्गिणे।
निचेरवे नमस्तुभ्यं स्तेनानाम्पतये नमः॥ २४॥
नमोऽरण्यानाम्पतये नमः परिचराय च।
स्तायूनाम्पतये तुभ्यं वञ्चते परिवञ्चते॥ २५॥
प्रणमामीषुधिमते नमस्तुभ्यं निषङ्गिणे।
तस्कराणान्ते पतये नमामि च पुनः पुनः॥ २६॥
सृकायिभ्यो जिघांसद्भ्यो मुष्णताम्पतये नमः।
असिमद्भ्यो विकृन्तानाम् पतये ते नमोनमः॥ २७॥
नक्तञ्चरेभ्यो रुद्रेभ्यो धावद्भ्यश्च नमोनमः।
उष्णीषिणे कुलुञ्चानाम्पतये ते नमोनमः॥ २८॥

धन्वायिभ्य इषुमद्भ्यो नमो गिरिचराय ते।
आतन्वाभ्यो वश्च प्रतिदधानेभ्यो नमोनमः॥ २९॥
आयच्छद्भ्यो नमोऽस्यद्भ्यो विसृजद्भ्यो नमो नमः।
विध्यद्भ्यश्च स्वपद्भ्यश्च जाग्रद्भ्यश्च नमोनमः॥ ३०॥
शयानेभ्य आसीनेभ्यस्तिष्ठद्भ्यो वो नमो नमः।
नमः सभापतिभ्यो वः सभाभ्यश्च नमोनमः॥ ३१॥
अश्वेभ्योऽश्वपतिभ्यश्चाव्याधिनीभ्यो नमोनमः।
विविध्यन्तीभ्यश्च नमः उगणाभ्यो नमोनमः॥ ३२॥
तृंहतीभ्यो गणेभ्यश्च व्रातेभ्यश्च नमोनमः।
नमो गणपति-व्रातपतिभ्यश्च नमोनमः॥ ३३॥
गृत्सपतिभ्यो गृत्सेभ्यो विरूपेभ्यो नमोनमः।
विश्वरूपेभ्यश्च नमः सेनाभ्यश्च नमोनमः॥ ३४॥
सेनानीभ्यो रथिभ्यो वो अरथेभ्यो नमोनमः।
चत्तृभ्यः संग्रहीतृभ्यो महद्भ्यश्च नमोनमः॥ ३५॥
अर्भकेभ्यस्तक्षकेभ्यो रथकृद्भ्यो नमोनमः।
कर्म्मारेभ्यः कुलालेभ्यो निषादेभ्यो नमोनमः॥ ३६॥
पुञ्जिष्ठेभ्यः श्वनिभ्यश्च मृगयुभ्यश्च वो नमः।
श्वभ्यश्च श्वपतिभ्यश्च रुद्राय च भवाय च॥ ३७॥
नीलग्रीवाय सर्व्वाय पशूनाम्पतये नमः।
नमस्ते शितिकण्ठाय नमस्तेस्तु कपर्द्दिने॥ ३८॥
सहस्राक्षाय च व्युप्तकेशाय शतधन्वने।
गिरिशाय नमस्तुभ्यं शिपिविष्टाय ते नमः॥ ३९॥

मीढुष्टमायेषुमते ह्रस्वाय वामनाय च।
बृहते च वर्षीयसे वृद्धाय सवृधे नमः॥ ४०॥
प्रथमाय नमोऽग्र्याय आशवे चाजिराय च।
नमः शीघ्राय शीभ्याय ऊर्म्यायावस्वनाय च॥ ४१॥
नादेयाय नमस्तुभ्यं द्वीप्याय च नमोनमः।
ज्येष्ठाय च कनिष्ठाय पूर्व्वजाय नमोनमः॥ ४२॥
मध्यमायापगल्भाय बुध्नायायापरजाय च।
जघन्याय च सोभ्याय प्रतिसर्य्याय ते नमः॥ ४३॥
नमो याम्याय क्षेम्याय श्लोक्याय च नमोनमः।
उर्वर्य्यायावसान्याय खल्याय च नमस्तु ते॥ ४४॥
नमो वन्याय कक्ष्याय श्रवाय च नमोनमः।
प्रतिश्रवाय च नमः आशुषेणाय ते नमः॥ ४५॥
आशुरथाय च नमः शूराय चावभेदिने।
बिल्मिने च कवचिने वर्म्मिणे च वरूथिने॥ ४६॥
श्रुताय श्रुतसेनाय दुन्दुभ्याय नमोनमः।
अहन्याय धृष्णवे च प्रमृषाय नमोनमः॥ ४७॥
तीक्ष्णेषवे चायुधिने स्वायुधाय सुधन्वने।
नमः स्रुत्याय पथ्याय काट्याय च नमोनमः॥ ४८॥
नीप्याय च नमस्तुभ्यं कुल्याय च नमोनमः।
सरस्याय नादेयाय वैशन्ताय नमोनमः॥ ४९॥
अवट्याय च कूप्याय वीघ्राय च नमोनमः।
आतप्याय च मेघ्याय विद्युत्याय नमोनमः॥ ५०॥

अवर्ष्याय च वर्षाय वात्याय च नमोनमः।
नमो ब्रात्याय रेष्माय वास्तव्याय नमोनमः॥ ५१॥
वास्तुपाय च सोमाय रुद्राय च नमोनमः।
अरुणाय च ताम्राय शङ्गवे च नमोनमः॥ ५२॥
नम उग्राय भीमायाग्रेवधाय नमोऽस्तु ते।
दूरेवधाय हन्त्रे च नमो हनीयसे नमः॥ ५३॥
सम्भवाय शङ्कराय मयोभवाय ते नमः।
मयस्कराय च शिवतराय च शिवाय च॥ ५४॥
अवार्य्याय च पार्य्याय नमः प्रतरणाय च।
उत्तरणाय तीर्थ्याय कुल्याय च नमोनमः॥ ५५॥
नमः शष्पाय फेण्याय सिकत्याय नमोनमः।
प्रवाह्याय किंशिलाय क्षयणाय नमोनमः॥ ५६॥
इरिण्याय प्रपथ्याय नमस्तुभ्यं पुलस्तये।
नमो व्रज्याय गोष्ठाय तल्पाय च नमोनमः॥ ५७॥
गेह्याय च हृदय्याय निवेष्याय च ते नमः।
गह्वरेष्ठाय शुष्काय हरित्याय नमोनमः॥ ५८॥
पांसव्याय रजस्याय लोप्याय च नमोऽस्तु ते।
उलप्याय च ऊर्व्याय सर्व्याय च नमोनमः॥ ५९॥
पर्णशदाय पर्णाय नमश्चाभिघ्नते नमः।
नम उद्गुरमाणाय नमः आखिदते नमः॥ ६०॥
इषुकृद्भ्यो धनुष्कृद्भ्यो नमः प्रखिदते नमः।
किरिकेभ्यश्च देवानां हृदयेभ्यो नमोनमः॥ ६१॥

तेषां सहस्रयोजने धन्वानि चावतन्मसि ।
नीलग्रीवाः श्वेतकण्ठाः दिवं रुद्रा उपश्रिताः ॥ ७२ ॥
तेषां सहस्रयोजने धन्वानि चावतन्मसि ।
नीलग्रीवाः श्वेतकण्ठाः अधः शर्व्वाः क्षमाचराः ।
तेषां सहस्रयोजने धन्वानि चावतन्मसि ॥ ७३ ॥
शष्पिञ्जरा वृक्षेषु ये नीलग्रीवा विलोहिताः ।
तेषां सहस्रयोजने धन्वानि चावतन्मसि ॥ ७४ ॥
ये च भूतानामधिपा विशिखासः कपर्दिनः ।
तेषां सहस्रयोजने धन्वानि चावतन्मसि ॥ ७५ ॥
ऐलवृदा आयुर्युधो ये पथाम्पतिरक्षसः ।
तेषां सहस्रयोजने धन्वानि चावतन्मसि ॥ ७६ ॥
ये च चरन्ति तीर्थानि सृकाहस्ता निषङ्गिणः ।
तेषां सहस्रयोजने धन्वानि चावतन्मसि ॥ ७७ ॥
ये चान्नेषु विविध्यन्ति पात्रेषु पिवतो जनान् ।
तेषां सहस्रयोजने धन्वानि चावतन्मसि ॥ ७८ ॥
एतावन्तश्च भूयांसो दिशो रुद्रा वितस्थिरे ।
तेषां सहस्रयोजने धन्वानि चावतन्मसि ॥ ७९ ॥
नमो रुद्रेभ्यो दुःखेभ्यो येषां वर्षन्तु सायकाः ।
सर्व्वदिक्षु विदिक्षु च तेषां कुर्व्वे दशाङ्गुलीः ॥ ८० ॥
नमोऽस्तु तेभ्यो नोऽवन्तु तथास्मान् मृड़यन्तु ते ।
जम्भे दध्मस्तमेतेषां यन्द्विष्मो यश्च द्वेष्टि नः ॥ ८१ ॥

नमस्तेभ्योऽन्तरिक्षे ये येषां वातस्तु सायकाः।
सर्व्वदिक्षु विदिक्ष्वेव तेषां कुर्व्वे दशाङ्गुलीः॥ ८२॥
नमस्तु तेभ्यो नोऽवन्तु तथास्मान् मृड़यन्तु ते।
जम्भे दध्मस्तमेतेषां यंद्विष्मो यश्च द्वेष्टि नः॥ ८३॥
नमो रुद्रेभ्यो ये पृथ्व्यां येषामन्नन्तु सायकाः।
सर्व्वदिक्षु विदिक्ष्वेव तेषां कुर्व्वे दशाङ्गुलीः॥ ८४॥
नमस्तु तेभ्यो नोऽवन्तु तथास्मान् मृड़यन्तु ते।
जम्भेदध्मस्तमेतेषां यंद्विष्मो यश्च द्वेष्टि नः॥ ८५॥
इमां गीतां नरो रौद्रीं पठंश्चापि श्रवन् स्मरन्।
प्रयाति रुद्रसालोक्यं न चासौ जायते पुनः॥ ८६॥

इति वल्लालचरिते[1] व्यासपुराणे रुद्रगीतोपनिषत्सु
विंशोऽध्यायः। ॐ ॐ

(१) ख, उत्तरखण्डे भट्टप्रोक्ते इत्यधिकः पाठः।

# एकविंशोऽध्यायः[1] ।

सिंहगिरिरुवाच ।

एतत्ते कथितं व्यासपुराणं मनुजेश्वर ।
राजर्षिभ्यो यथा प्राह पुरा व्यासो महामुनिः ॥ १ ॥
भुङ्क्ष्व भोगान् यथाकामं पितॄन् देवान् च तर्पय ।
ब्राह्मणांश्च प्रजानाथ दानैर्बहुविधैः सदा ॥ २ ॥
कुरु पिष्टपिण्डयज्ञं सह राज्ञ्या नवीनया ।
शिलादेव्या महीपाल तस्यां पुत्रो भविष्यति ॥ ३ ॥
तुलापुरुषदानञ्च यज्ञे तत्र परन्तप ।
विधत्स्व नियतः कृच्छ्रञ्चरित्वा धरणीपते ॥ ४ ॥
स्वस्त्यस्तु ते गमिष्यामि जगन्नाथपुरीं प्रति ।
पुनरेवागमिष्यामि यदा मां संस्मरिष्यसि ॥ ५ ॥

शरणदत्त उवाच[2] ।

आख्यायैवं पार्थिवाय मुनिः सिंहगिरिस्ततः ।
जगाम तैर्वृतः शिष्यैर्यैः स राजन् समागतः ॥ ६ ॥
गते सिंहगिरौ राजा चिन्तयन् मनसि क्षणम् ।
पिण्डयज्ञे च दानेषु मनो दध्रे पुनः पुनः ॥ ७ ॥

---

(१) आदर्श पुस्तकयोर्नास्ति ।
(२) क पुस्तके नास्ति ।

यज्ञादीनां फलं ध्यायन् मन्त्रिणा च पुरोधसा।
वलदेवेन विप्रैश्च मन्त्रयामास पार्थिवः॥ ८॥
मन्त्रयित्वा ततो राजा तदानीं ब्राह्मणैः सह।
यज्ञञ्च दानानि कर्त्तुं करणाण्युपचक्रमे॥ ९॥
आज्ञापयत् ततो भूप आदिदेवं रहस्विनम्।
मन्त्रिणं सद्गुणैर्युक्तं कर्त्तव्यानि च सर्व्वशः॥ १०॥

राजोवाच[1]।

आनयन्तु यथा प्रोक्तं वलदेवादिभिर्द्विजैः।
सर्व्वद्रव्यं यथायोगं यज्ञे चैव विहापिते॥ ११॥
हरदासो विष्णुदासो दुर्गासिंहश्च सत्वरम्।
अन्नादीनाञ्च सम्भारान् शकटैश्च यथाक्रमम्॥ १२॥
विधीयतां यज्ञवाटः पताकादिविभूषितः।
कार्य्यन्तामुपकार्य्याश्च राजन्यानां महात्मनाम्॥ १३॥
शतञ्च सूतकण्ठानां पाके च परिवेशने।
वीणावादञ्च गायन्ताम् नृत्यन्तां नटनर्त्तकाः॥ १४॥
प्रेक्षागृहाश्च कार्य्यन्तां सर्व्वान्तःपुरयोषिताम्।
आमन्त्र्यन्तां ब्रह्मक्षत्रवैश्यसत्शूद्रजातयः॥ १५॥
अन्नादिसुसमृद्धानि कार्य्यन्तां शरणान्युत।
ब्राह्मणा वेदवेत्तारो वसेयुर्य्येषु पूजिताः॥ १६॥

---

(१) क, पुस्तके नास्ति।

आहूय लक्ष्मणं[1] राजा प्राहेदं वचनं ततः ।
आमन्त्रयस्व यज्ञाय गत्वा त्वं विक्रमं पुरम् ॥ १७ ॥
श्रीसुखसेनं पितृव्यं कुमारञ्च ध्रुवं तथा ।
आगच्छन्तु च सर्व्वाणि तयो रन्तःपुराणि च ॥ १८ ॥

शरणदत्त उवाच[2] ।

गत्वासौ विक्रमपुरं लक्ष्मणः परवीरहा ।
सुखमामन्त्रयाञ्चक्रे अभिवाद्य कृताञ्जलिः ॥ १९ ॥
ध्रुवश्च सुखसेनश्च सत्कृत्यामन्त्रितो मुदा ।
यज्ञाय जग्मतुर्गौड़ं गृहीत्वान्तःपुराणि तौ ॥ २० ॥
यज्ञं वल्लालसेनस्य संश्रुत्य वैदिका द्विजाः ।
जग्मुः प्रहृष्टमनसो यज्ञं यज्ञविदस्तदा ॥ २१ ॥
अनाहूता रवाहूता ब्राह्मणाश्च धनाशया ।
समापेतुः सर्व्वदिग्भ्यः शतशोऽथ सहस्रशः ॥ २२ ॥
ययुः सामन्तराजानो गृहीत्वोपायनानि च ।
सानुगा विविधैर्यानैरनुभोक्तुं महोत्सवम् ॥ २३ ॥
आवसथान् ददुस्तेषां नृपतेरधिकारिणः ।
सुवहून् शोभनाकारान् भक्ष्यभोज्यसमन्वितान् ॥ २४ ॥
वल्लालं ते ततो दृष्ट्वा तेनाथ प्रतिपूजिताः ।
यथोद्दिष्टानावसथान् जग्मुस्ते मण्डलेश्वराः ॥ २५ ॥

---

(१) ख, लवणं ।

(२) क पुस्तके नास्ति ।

संविश्रम्य ततः कामं राजराजन्यकादयः।
ददृशुस्ते प्रजानाथं पाण्डवं तं सदोगतम्॥ २६॥
ततो विप्रा यथाकाले वेदवेदाङ्गपारगाः।
दीक्षयामासुर्नृपतिं वल्लालं मल्हनात्मजम्॥ २७॥
सुखसेनं विष्णुमल्लं प्रत्युद्गम्य धरापतिः।
अभिवाद्याभिवादार्हौ इदं वचनमब्रवीत्॥ २८॥
धरसेनं यज्ञसेनं धर्म्मसिंहं ध्रुवं तथा।
प्रसीदन्तु भवन्तो मां यज्ञादिदानकर्म्मसु॥ २९॥
एवमुक्त्वा ततस्तान् स धार्म्मिको धरणीपतिः।
यथायोग्याधिकारेषु युयोजाधिकृतान् तदा॥ ३०॥
भक्ष्यभोज्याधिकारेषु भीमसेनमयोजयत्।
अयुजद्दानाधिकारे दानाचार्य्यं वृहस्पतिम्॥ ३१॥
अन्येष्वप्यधिकारेषु पुरुषान् संन्ययोजयत्।
परिग्रहे ब्रह्मक्षत्रविशां लक्ष्मणं[1] मुक्तवान्॥ ३२॥
राज्ञो यज्ञसभा गौड़े नानापादपशोभिता।
भ्राजिष्णु विश्रामवेश्मवती रम्या सुरूपिणी॥ ३३॥
नानारत्नैः कुप्यरत्नैः कुथैश्चित्रैर्वितानकैः।
पर्य्यङ्कैश्च पताकाभिर्ध्वजैश्च पर्य्यशोभत॥ ३४॥
स्थानान्युपकल्पितानि सगणानां पृथक् पृथक्।
ब्राह्मणानां क्षत्रियाणां वणिजाञ्चान्त्यजन्मनाम्॥ ३५॥

---

(१) ख, लवण।

ब्राह्मणाः क्षत्रिया वैश्यास्तथा सत्शूद्रजातयः ।
नृपेणामन्त्रिताः सर्व्वे तत्र रासे रसं गताः ॥ ३६ ॥
भोजका राजपुत्राश्च राजराजन्यकादयः ।
महामाण्डलिकाः सर्व्वे चान्तरङ्गा महापदाः ॥ ३७ ॥
यथायोग्येष्वासनेषु निषेदुः प्रतिपूजिताः ।
वल्लालेन सभायां ते दिवीव त्रिदिवौकसः ॥ ३८ ॥
भ्राजमानः सभामध्ये सुत्रामेव सुधर्म्मणि ।
देवान् पितॄंश्च यज्ञेन पापघ्नेनायजन्नृपः ॥ ३९ ॥
अथ सखड्गः सोष्णीषः सर्व्वाभरणभूषितः ।
पुष्टिकामोऽकरोद्राजा दानं कर्णं इवापरः ॥ ४० ॥
तत्रात्मपरिमाणेन काञ्चनेन धरामरान् ।
दानेन तोषयामास सहस्रदक्षिणावता ॥ ४१ ॥
अपवर्गेऽभिरूपान् स ब्राह्मणान् नृपतिस्ततः ।
अन्यांश्च भोजयामास शतशोऽथ सहस्रशः ॥ ४२ ॥

देवा वभूवुः पितरश्च तत्र
हव्यैश्च कव्यै र्नितरां सुतृप्ताः ।
भूदेव वर्गास्तपनीयदानै
र्भोज्यान्नपानैर्व्वहुदक्षिणाभिः ॥ ४३ ॥

इत्यानन्द[1]भट्टप्रोक्ते[2] शरणदत्तीये वल्लालचरिते यज्ञोत्सवो-
नाम एकविंशोऽध्यायः ।

(१) ख, श्रीमदानन्द ० ।
(२) ख, वल्लालचरिते उत्तरखण्डे इत्यधिकः पाठः ।

## अथ द्वाविंशोऽध्यायः(१)।

ज्ञातयश्च कुटुम्बाश्च मिलिताश्च ततोऽन्यदा।
भोज्यशालां प्रविविशूराणका राजपुत्रकाः॥ १॥
आसनेषूपविष्टेषु ततस्तेषु महात्मसु।
भुज्यमानेषु सर्व्वेषु वल्लालेन मुदा सह॥ २॥
सत्शूद्राणां गणास्तत्रापरा भोजनशालिकाः।
स्पर्द्धया विविशुर्भोक्तुं विशां न दृश्यते स्थली॥ ३॥
तस्मिन्नवसरे वैश्या मन्त्रयन्तः परस्परम्।
उत्तस्थु र्निर्य्यातुकामास्तदानीं राजसद्मनः॥ ४॥
यदा केचिद्बहिर्याताः केचिद्वा गमनोद्यताः।
तदाताननुगत्याह भीमसेनो विनीतवत्॥ ५॥
अनाहाराः किमर्थं भो निर्गच्छथ महाजनाः।
अस्मासु वो यदाकूतं सर्व्वथार्हथ भाषितुम्॥ ६॥
तच्छ्रुत्वा वणिजः प्राहुः श्रूयतां भो महाशय।
स्पृष्टास्पृष्टिः समभवत् तदर्थं भोक्तुमक्षमाः॥ ७॥
अनादृत्य यतस्तेषां भीमसेनोऽतिकोपनः।
शूद्राणामीदृशी स्पर्द्धा इत्युक्त्वा तानवाक्षिपत्॥ ८॥

(१) पुस्तके नास्ति।

ततो वादातिवादाश्च बभूवुः कुपितस्तदा।
भीमसेनोऽब्रवीद्वाक्यं परुषं राजवल्लभः॥ ९॥
ततस्ते वणिजः सर्व्वे निर्ययूराजसद्मनः।
आक्रोशन्तो विक्रोशन्तो वर्षान्ते वारिदा इव॥ १०॥

इत्यानन्दभट्टप्रोक्ते शरणदत्तीये वल्लालचरिते[1] वणिजावमाननं नाम द्वाविंशोऽध्यायः।

---

(१) ख, इति श्रीमदानन्दभट्टप्रोक्ते वल्लालचरिते उत्तरखण्डे इत्यधिकः पाठ

## अथ त्रयोविंशोऽध्यायः[१]।

अथान्येद्युः सभासीनमभ्येत्य पृथिवीश्वरं।
ऊचे भूमिन्यस्तजानुर्भीमो नृपतिवल्लभः॥ १॥
देव सर्व्वे शूद्रगणा भोजनैः परितोषिताः।
सुवर्णा वणिजो दर्पादभुक्त्वैव विनिर्गताः॥ २॥
वणिजोऽतिदुरात्मानोऽविनीताः कुलगर्व्विताः।
ब्रह्मक्षत्रपंक्तिभोज्यं ते काङ्क्षन्ति दुराशयाः॥ ३॥
भोज्यभूमिं विलोक्यापि विहीनं वृषलैर्जनैः।
श्रीमन्तमवजानन्तो गतवन्तो यथागतम्॥ ४॥
सर्व्वेषां वणिजां नेता वल्लभः स दुराशयः।
पालैर्हृतो महाराज त्वया सह विरुध्यते॥ ५॥
वर्णमानोऽस्य भवति जामाता मगधेश्वरः।
धरां स मन्यते तेन शरावमिव गर्वितः॥ ६॥
एतदाकर्ण्य नृपतिर्भीमसेनवचस्तदा।
ज्वलनो हविषेनेव प्रजज्वाल स मन्युना॥ ७॥
दन्तान् कटकटाय्यासौ राजा राजासनोपरि।
चकाशे गगणारूढ़स्तड़ित्वानिव घोषवान्॥ ८॥
पपात मस्तकात्तस्य किरीटं हीरकोज्ज्वलम्।
कम्पमानतनोः सायमुल्कापिण्डमिवाम्बरात्॥ ९॥

---

(१) कपुस्तके नास्ति।

तदानीं राजबल्लालः क्रोधघूर्णितलोचनः ।
वणिजां दर्पचूर्णार्थं शपथं कृतवान् भृशम् ॥ १० ॥

राजोवाच ।

यदि दाम्भिकान् सुवर्णान् वणिजः शूद्रत्वे न पातयिष्यामि, वल्लभचन्द्रसौदागिरस्य दुरात्मनो दण्डं न विधास्यामि, तदा गोब्राह्मणघातेन यानि पातकानि भवितव्यानि तानि मे भविष्यन्तीति। धार्त्तराष्ट्राणां विनाशाय भीमसेनेन यादृशः शपथः कृतः एतेषां पातनाय शपथो मे तादृशो ज्ञातव्यः, अद्यावधि एते सर्व्वे शूद्रवद्ग्राह्याः। व्यर्थमेषां यज्ञसूत्रधारणमतःपरमेतेषां याजनाध्यापने प्रतिग्रहञ्च ये ब्राह्मणाः करिष्यन्ति, ते ज्वलन्तोऽपि पतिष्यन्ति, नान्यथा ॥ ११ ॥

अचिरेणायमादेशोऽभवद्राष्ट्रे प्रचारितः ।
तच्छ्रुत्वा मन्त्रयामासु वैणिजो मिलितास्तदा ॥ १२ ॥
अविचारात्ततो राज्ञः क्रोधकम्पत्कलेवराः ।
रुरुधुर्नगराद्गौड़ाद् दासानां व्यवसायिनः ॥ १३ ॥
द्विगुणं त्रिगुणं मूल्यं दासानां प्रददुर्विशः ।
दासाभावात् महाकष्टं बभूव सर्व्वजातिषु ॥ १४ ॥
एवम्भूते महाकष्टे प्रजावर्गैर्निवेदितः ।
कर्त्तव्यं चिन्तयामास तदानीं भुवनेश्वरः ॥ १५ ॥
नान्योपायं तदा दृष्ट्वा ब्राह्मणानन्वशादिदम् ।
कार्य्या लोकहितार्थाय कैवर्त्ता दास्यकर्म्मसु ॥ १६ ॥

दास्यकामास्तु कैवर्त्ता श्रुत्वा नृपतिशासनम् ।
आजग्मुस्ते राजकुलं शतशोऽथ सहस्रशः ॥ १७ ॥
तान् चाब्रवीत्ततो राजा गलवस्त्रकृताञ्जलीन् ।
वृत्तिर्वो दीयते सेवा गच्छध्वं व्यवहारताम् ॥ १८ ॥
महामाण्डलिकं कृत्वा ततस्तेषां महत्तरं ।
महेशं दक्षिणाघाटे प्रेरयामास पार्थिवः[1] ॥ १९ ॥
मालाकाराः कुम्भकाराः कर्म्मारास्च ततोऽन्यदा ।
युक्तहस्ता गलेवस्त्राः पुरस्तस्थुर्महीक्षितः ॥ २० ॥
सन्तुष्टः सेवया तेषां व्याजहार वचो नृपः ।
यूयं सत्शूद्रवद्ग्राह्या भवेत वचनान्मम ॥ २१ ॥
अशुचिर्वचनाद्यस्य शुचिर्भवति मानवः ।
शुचिस्चैवाशुचिः सम्यक् कथं राजा न दैवतम् ॥ २२ ॥
कालेन गच्छता राजा दासानां व्यवसायिनः ।
ब्रह्मत्वाच्चावयामास ब्रह्मबन्धून् सुदुर्म्मतीन् ॥ १३ ॥
स्वसेवायां नियुक्तञ्च धावञ्चक्रे महत्तरम् ।
[2]ठक्कुरं च चकारासौ प्रसन्नो राजनापितम् ॥ १४ ॥

---

(१) ख, कैवर्त्तानां प्रधानं यं पुराचक्रे महत्तरम् ।
महामाण्डलिकं चक्रे तमिदानीं महीपतिः ॥
ततस्तं दत्तं स्वगणैर्नानाप्रहरणायुतम् ।
महेशं दक्षिणाघाटे प्रेरयामास भूपतिः ॥
(२) ख, तस्मिन्नवसरे केचिन्मन्त्रयित्वा परस्परम् ।
अभ्येत्य काश्यपीकान्तं ब्राह्मणा वाक्यमब्रुवन् ।

अनाहतस्वधर्म्मान् स विलोक्य वणिजस्ततः।
आदिशत् तान् नृपः सर्व्वान् यज्ञसूत्राणि वर्ज्जितुम् ॥१५॥
त्यजन्तु यज्ञसूत्राणि वणिजो राष्ट्रवासिनः।
त्यजेद्यो न स दण्ड्यः स्यात् सेवकान्नृप इत्यशात् ॥ १६ ॥
आहत्य डिण्डिमान् भृत्या नगरे नगरे विशाम्।
राजाज्ञां घोषयामासुश्चत्वरेषु च वीथिषु ॥ १७ ॥
राजाज्ञामवजानन्तो धर्म्मभीता महाजनाः।
त्वरमाणा दिशो जग्मुः सदारादिपरिच्छदाः ॥ १८ ॥

---

ब्राह्मणा ऊचुः।

वयं श्रेष्ठा हि वर्णानां जात्या चैव कुलेन च।
सुवर्णा वणिजो दर्पादेवं वदन्ति सर्व्वदा ॥
दासीवंशज इत्येवं वदन्तो मनुजेश्वर।
ब्राह्मणान् सद्वंशजातानस्मानुपहसन्ति ते ॥
यज्ञोपवीतिनः सर्व्वे सुवर्णाः सौम्यदर्शनाः।
ब्राह्मणास्तान् भ्रान्तबुद्ध्या नमस्कुर्व्वन्ति सर्व्वदा ॥
तेषां हि धर्म्महननं कर्त्तव्यं पृथिवीपते।
स्पर्द्धेयुर्न यथास्माभिर्विप्रैः सत्कुलजैः सह।
अब्राह्मणकुले जातमायुष्मन्तं जनेश्वर।
अवमत्य यद्वदन्ति वक्तुं तन्नेह साम्प्रतम् ॥
सर्व्वान् यज्ञोपवीतेभ्यः तान् च्यावय महीपते।
सर्व्वे ते धर्म्महननात् पतिष्यन्ति न संशयः ॥
एवमुक्त्वा महीपालं विरेमुस्ते द्विजोत्तमाः।
नृपतिर्महताविष्टः क्रोधेनासौ जगर्ज्ज ह ॥

अयोध्यां प्रययुः केचित् केचिन्मुद्गगिरिं तथा[1]।
चन्द्रमायुतं पाटलीञ्च ताम्रलिप्तीञ्च केचन ॥ १९ ॥
[2]तथोदयं पुरं केचित् केचिन्मानगढ़ं ययुः,
विनीतञ्च पुरं केचिच्छ्रिङ्खलामपि केचन ॥ २० ॥
येन यातास्तु ते सर्व्वे[3] राजदण्डभयार्द्दिताः।
तत्यजुर्यज्ञसूत्राणि हैमानि ताम्रवाणि च ॥ २१ ॥
तत्रानेहसि वल्लालो विलोक्य व्याकुलं कुलम्।
ब्राह्मणाञ्च क्षत्रियाणां मन्त्रयामास वैदिकैः ॥ २२ ॥
विविच्य वीजमाहात्म्यं ततः संस्कारयंश्च तान्।
ब्रह्मत्वं क्षत्रियत्वञ्च कल्पयामास स प्रभुः ॥ २३ ॥

इत्यानन्द[4]भट्टप्रोक्ते शरणदत्तीये वल्लालचरिते
जातीनां पातनोन्नयनादिनाम-
त्रयोविंशोऽध्यायः ॥

(१) ख, विशः।
(२) अयं श्लोकः कपुस्तके नास्ति।
(३) ख, अक्षमा ये तु यातुं ते।
(४) ख, इति श्रीमदानन्दभट्टप्रोक्ते वल्लालचरिते उत्तरखण्डे।

# अथ चतुर्विंशोऽध्यायः[1]।

पुरा श्रीराजवल्लालो वसन् गौड़े पुरोत्तमे।
अर्हतामनुरूपाणामुपाचक्रे पृथुप्रथः ॥ १ ॥
कारयित्वा मठं सौम्यं न्यस्तचित्रशिलातलम्।
पक्वेष्टकामयं दिव्यं शयनासनसंयुतम् ॥ २ ॥
सुभौमं चित्रशालाढ्यम् दृढ़स्तम्भम् मनोहरम्।
न्यस्तग्रन्थाधारभूतप्रत्यग्रनागदन्तकम् ॥ ३ ॥
नानापुष्पफलालोलरम्यारामविभूषितम्।
अत्यच्छस्वादुपानीय-सम्पन्नसलिलाशयम् ॥ ४ ॥
द्वारवातायनोपेतं नानोपस्करसंयुतम्।
सुधोपलिप्तम् श्वेताभम् सदन्नादिप्रपूरितम् ॥ ५ ॥
व्याख्यानध्यानहोमादिपठनस्थलशोभितम्।
यतीनां पथिकानाञ्च वासवेश्मसमन्वितम् ॥ ६ ॥
गु[2]ह्यापचरकैर्युक्तं प्रद्युम्नेश्वरसन्निधौ।
योगिनः श्रीसिंहगिरेर्विधिनासौ न्यवेदयत् ॥ ७ ॥
कौपीनेन्धनवस्त्रादिवस्तूनां प्राप्तये तथा।
प्रददौ विपुलां भूमिं राजा श्रद्धासमन्वितः ॥ ८ ॥

---

(१) कपुस्तके नास्ति।
(२) क. गुह्यापवरकैः।

ततः सर्व्वगुणोत्कर्षशुद्धबुद्धिर्नृपोत्तमः ।
ताम्रपट्टे कारयित्वा शासनं परशासनः ॥ ९ ॥
सुवर्णभुक्तिकस्यान्तर्ग्रामं कासारकं ददौ ।
वर्षवृद्धौ महाराजो गौतमानन्तशर्म्मणे ॥ १० ॥
उपक्लृप्तभक्ष्यभोज्यसर्व्वधान्यसमन्वितम् ।
दासदासीसमायुक्तं सर्व्वोपस्करसंयुतम् ॥ ११ ॥
सुधावलिप्तं सुदृढं कपाटार्गलयन्त्रितम् ।
शुभप्रवेशनिष्काशं जालादिपरिशोभितम् ॥ १२ ॥
एवंविधं कारयित्वा बहुशो भवनं नृपः ।
दाक्षिणात्यान् ततस्तेषु वासयामास भूसुरान् ॥ १३ ॥
स्वर्णदानं रौप्यदानं गोदानञ्च धरापतिः ।
दानञ्च विविधञ्चक्रे नित्यनैमित्तिकादिकम् ॥ १४ ॥[1]

नानोपभोगानुपभुञ्जतः सत्-
पात्रेषु दानं ददतश्च नित्यम् ।
जगाम कालः सुखतः समानो
भूतो न कश्चिद्भवितास्ति चास्य ॥ १५ ॥

---

१ । स्वपुस्तके स्वर्णदानेत्यादिश्लोकस्थले अयं श्लोकः पठ्यते ।
ततो लक्ष्मणसेनस्य राजा जन्ममहोत्सवे ।
ब्राह्मणान् धनिनश्चक्रे कृत्वा यज्ञं कृतन्तु तैः ॥

न येन भुक्ताः सुखदाः सुभोगाः
दानं न दत्तं धनिनार्हताञ्च ॥
अवाप्यते तेन कठोरघोर
दुःसह्यदुःखमधिकं परत्र ॥ १६ ॥

इत्यानन्द[1]भट्टप्रोक्ते वल्लालचरिते[2] दानधर्म्मानुष्ठानं नाम चतुर्विंशोऽध्यायः ।

---

(१) इति श्रीमदानन्द० ।
(२) खपुस्तके उत्तरखण्डे इत्यधिकः पाठः ।

## अथ पञ्चविंशोऽध्यायः[1]।

ॐनमः शिवाय।

आदित्यवर्णंस्तमसः परस्तात्
हिरण्यगर्भो जगदन्तरात्मा।
त्वत्तोऽस्ति जातः पुरुषः पुराणः
त्वत्तोऽपि वेदा जय देव देव ॥ १ ॥

त्वत्तः प्रसूता जगतः प्रसूतिः
सर्व्वानुभूस्त्वं परमाणुभूतः।
अनोरणीयान् महतो महीयान्
आनन्दरूप जय देव शम्भो ॥ २ ॥

त्वमेव विष्णुश्चतुराननस्त्वम्
त्वमेव रुद्रो भगवान् महेशः।
त्वं ब्रह्म शून्यं सगुणो[2]गुणश्च
चिन्मात्ररूपो जय देव सर्व्व ॥ ३ ॥

एकोरुद्रस्त्वं करोषीह विश्वम्
त्वं पालयस्यखिलं विश्वरूपम्।
त्वामेवान्ते निलयं विन्दतीदम्
[3]वन्दामहे जयदेवादिदेव ॥ ४ ॥

---

(१) कपुस्तके नास्ति।

(२) क, ख, सगुणागुणाश्च।

(३) क, त्वां वन्दिम जयदेवदेव।

प्रमुञ्चमान अमृतस्य धारां
समिद्धि तापं सुरमानुषाणाम् ।
अनन्तरूपं खलु बोधयन्ति
त्वामेव वेदा जय विश्वनाथ ॥ ५ ॥

अधिमुक्तिविमुक्तिप्रदं भवम्
महामुनिं ब्रह्मपरं पवित्रम् ।
शिरसा वन्दामहे[1] जगद्गुरुम्
स्वयम्भुवं देव जय लोकनाथ ॥ ६ ॥

त्रातासि दीप्तोसि परायणोसि
नाथोसि लोके प्रणतोऽस्मि तुभ्यम् ।
वैद्योत्तमस्त्वं खलु शल्यहर्त्ता
चिकित्सकस्त्वं जय देवदेव ॥ ७ ॥

अमलं विमलं रजताद्रिनिभम्
भवपारकारं जगदर्थकरम् ।
पञ्चधा विमोचवर चक्षुःप्रदम्
वन्दामहे[2] त्रिनयनं जय देव ॥ ८ ॥

सहस्रपादाक्षिशिरोभियुक्तम्
सहस्रबाहुं परतः परस्तात् ।
त्वां ब्रह्मपारं प्रणमामि शम्भुम्
पिनाकिनं त्वां जय देवदेव ॥ ९ ॥

---

(१) क, वन्दिम त्वां ।

(२) क, वन्दामि त्वां ।

उमाधवोग्राय भवोद्भवाय
नमामि सर्व्वाय हराय तुभ्यम् ।
कालाय भर्गाय प्रभाकराय
सर्व्वात्मने देव नमः शिवाय ॥ १० ॥

इति श्रीमदानन्दभट्टप्रोक्ते बल्लालचरिते कालिदासनन्दि-
लिखित-श्रीजयमङ्गलगाथा-कीर्त्तनं नाम
पञ्चविंशोऽध्यायः ।

---

## अथ षड्विंशोऽध्यायः[१] ।

अथ निर्व्वासितः पूर्व्वं गणैर्धर्म्मगिरिः सह ।
वृत्तिहीनो ययौ दूरं देशाद्देशान्तरं भ्रमन् ॥ १ ॥
राजाज्ञया कृतं ध्यायन्नवमानं च पीड़नम् ।[१]
स्वस्य भ्रष्टाधिकारश्च न लेभे निर्वृतिं गिरिः ॥ २ ॥
वैरस्यान्तं चिन्तयान आवर्त्त्य वत्सरान् ततः ।
[२]वायादुम्बं ददर्शासौ म्लेच्छेशं स्वगणैर्वृतम् ॥ ३ ॥
वङ्गालधनरत्नानां उत्थाप्य पणनात् स तम् ।
म्लेच्छेशं निशि तत् सैन्यैन्यैरुणद्विक्रमं पुरम् ॥ ४ ॥
धूम्रवर्णो धनुर्द्धारी धनुष्मानिव वारिदः ।
वायादुम्बः सैन्यमध्ये जगर्ज्ज च ललम्फ च ॥ ५ ॥
कुद्दालपरशुग्राहं कुर्द्दनोर्म्मिमहास्वनम् ।
अट्टहासवारिहासं तत्सैन्यं सागरायते ॥ ६ ॥
पद्घातैः कम्पयन् पृथ्वीं हुङ्कारैश्च दिशो दश ।
नादयन् पञ्चसाहस्रं म्लेच्छसैन्यं ननर्त्त ह ॥ ७ ॥
अथ भोगसुखाच्छन्नो राजान्तःपुरमध्यगः ।
कालेऽविदितवृत्तान्तश्चिराय प्रत्यबुध्यत ॥ ८ ॥

---

(१) क, अपमानप्रपीड़नौ ।
(२) कपुस्तके नास्ति ।

प्रभाते पा[illegible]ः श्रुत्वा महाहलहलारवम्।
कान्ताभुजलतां हित्वा जग्राहासिलतां तदा ॥ ९ ॥
अशोधिताम्बुपरिखाश्वाट्टयन्त्रविवर्ज्जिताम्।
चिन्तयन् पुरमात्मानममंस्त निहतं नृपः ॥ १० ॥
ततो विलोक्य राजानं युद्धयात्रासमुद्यतम्।
सर्व्वा राजसीमन्तिन्यो वाष्पाकुलविलोचनाः ॥ ११ ॥
शिलादेवी च पद्माक्षी सुभगा हेममालिका।
सोनदेवा च चण्डेली तमुपेत्य वभाषिरे।
माभूदभद्रं युद्धेऽस्मिन् भद्राभद्रं भवेद्यदि ॥ १२ ॥
अनाथाः किं करिष्यामो वद नाथ तदावलाः।
तच्छ्रुत्वा वचनं तासां राजा वाष्पाविलेक्षणः ॥ १३ ॥
परिष्वज्य क्रमात्ताश्च चुम्बित्वा वदनेषु च।
प्रत्यूचे मुखपद्मानि तासां पश्यन् महीपतिः ॥ १४ ॥
पारावतद्वयं याति प्रेयस्यः समराङ्गणम्।
यदि तौ प्रत्यागच्छेताम् खगौ प्राप्टत्तिकाविव ॥ १५ ॥
तदानीं ज्ञास्यथास्माकं रणक्षेत्रे पराजयम्।
रक्षितुं वो सतीधर्म्मं यवनेभ्यो वराननाः।
वह्निं प्रज्वालयिष्यन्ति भृत्या दत्ताज्ञया मया ॥ १६ ॥
इत्युक्त्वा पुनरालिङ्ग्य चुम्बित्वा च पुनः पुनः।
सन्नद्धो युद्धयात्रां स चकार स्ववलैर्वृतः ॥ १७ ॥
तस्याभिषेणनं रेजे नानाप्रहरणायुतम्।
हस्त्यारोहैरश्ववारै रथिभिश्च पदातिभिः ॥ १८ ॥

ततोभूत्तुमुलं युद्धं म्लेच्छक्षयकरं महत् ।
हताहतयोद्धृवर्ग-रक्तप्लावितभूतलम् ॥ १९ ॥
जजं नष्टंबलं तत्र वायादुम्बम् महावलम् ।
रुरोध क्ष्मापतिर्युद्धे श्रीराम इव रावणम् ॥ २० ॥
ततस्तरसा विक्रम्य शीघ्रहस्तो महीपतिः ।
मस्तकं तस्य चिच्छेद नमूचेरिव वासवः ॥ २१ ॥
जयश्रीर्वरयामास दामहस्ता नृपं यदा ।
दामहस्तास्तदा दुम्बमवध्नन् यमकिङ्कराः ॥ २२ ॥
काले तस्मिन् भाग्यदोषात् पिञ्जरान्निःसृतौ खगौ ।
उन्मुक्तौ केनचिद्वा चेत् रामपाल(१)पुरं गतौ ॥ २३ ॥
तत्र पारावतौ दृष्ट्वा यमदूताविवागतौ ।
सर्व्वा ज्वलदग्निकुण्डे पेतुर्नृपतियोषितः ॥ २४ ॥

इति वल्लालचरिते श्रीमदानन्दभट्टकृतं खिलवल्लालचरितं नाम षड्विंशोऽध्यायः ।

---

(१) ख, वल्लालस्य ।

अथ सप्तविंशोऽध्यायः[१]।

पिञ्जरं शून्यमालक्ष्य रणक्षेत्रे महीपतिः।
अत्यन्तमशुभाशङ्की त्वरया स परावृतत् ॥ १ ॥

वह्निध्वजं पश्यमानो दूरतः परमाकुलः।
ततः स्वं प्राविशद्वेश्म सर्व्वनाशं विलोकितुम् ॥ २ ॥

दृष्ट्वार्द्धदग्धा ज्वलने स्वपत्नी[२]
रुन्मत्तरूपो नितरां बभूव।
निवार्य्यमाणोपि जनैः प्रयत्नात्
पपात राजा ज्वलदग्निकुण्डे[३] ॥ ३ ॥

सहस्रेऽष्टविंशयुते शकाब्दे पृथिवीपतिः।
स्त्रीभिः सार्द्धं महाभाग उत्पपात दिवं प्रति ॥ ४ ॥

श्रूयतेऽत्र प्रवचनं पारम्पर्य्यक्रमागतम्।
वल्लालोऽनुययौ युद्धे पितरं शौर्य्यशालिनम् ॥ ५ ॥

मिथिलायां स्थितस्तत्र कश्चिद्योगी धृतव्रतः।
वल्लालो युद्धयात्रायां तरसा तमलङ्घयत् ॥ ६ ॥

---

(१) कपुस्तके नास्ति।

(२) क ख, सपत्नी।

(३) ख, राज्याभिषेकमारभ्य चत्वारिंशत्समा यदा
मासद्वयं व्यतीतञ्च स पञ्चषष्टिहायनः। इत्यधिकः श्लोकः।

अक्षपादेनाभिहतो वल्लालमशपन्मुनिः।
सकलत्रो वह्निकुण्डे पतित्वा त्वं मरिष्यसि[1] ॥ ७ ॥
तत् स्मृत्वा ब्रह्मशापं स विजयं लब्धवानपि।
चिन्तयामास मनसि मृत्युकाल उपस्थितः ॥ ८ ॥
तेनैव विवशो राजा ध्रुवं ज्वलनमाविशत्।
ब्रह्मशापादृते नैव विपत्तिर्भवेदीदृशी ॥ ९ ॥

स ब्रह्मदण्डेन पुरा हतोऽभूत्
दारैश्च सार्द्धमवनीश्वरः सः।
कपोतप्रत्यागमनञ्च मृत्यौ
राज्ञश्च शोको न हि मुख्यहेतुः ॥ १० ॥

---

राजन् जानासि भद्रं ते इयं शिवजला शुभा।
कीर्त्तिशेषं गतवतः कीर्त्तिं वदति दीर्घिका ॥ १ ॥

राज्ञो विनष्टीकृतकीर्त्तिजातं
गवाशनैः कालवशाच्च पापैः।
कीर्त्यानयासाविव विद्यमानः
हाहा गतः क्वावनिनाथवंशः ॥ ४ ॥

आनन्दभट्टकविना कलितं प्रयत्नै-
र्व्यासास्यपङ्कजविनिःसृतवागुपेतम्।
वल्लालराजचरितम् नवचन्द्ररूपं
सल्लोकहृत्कुमुदिनीं विकसीकरोतु ॥ ५ ॥

(१) ख, पतन् रे मर दुर्म्मते।

यद्व्याहृतं भट्टपादैरुक्तं यच्चान्यसूरिभिः ।
तत्तद्राजचरित्रेऽस्मिन् वाल्लाले प्रकटीकृतम् ॥ ६ ॥
निर्ब्राह्मणीयं पृथिवी सुभौमेन कृतेति यत् ।
उक्तं तत्तु राजभयादिति मन्यामहे वयम् ॥ ७ ॥
तत्तु क्रीड़ार्थमथवा भट्टपादैरुदाहृतम् ।
मध्ये व्यासपुराणस्य भवेद्दा तन्निरर्थकम् ॥ ८ ॥
निःक्षत्रियेयं वसुधा भार्गवेण कृता पुरा ।
एवं हि भारते प्राह स्वयं व्यासो महामुनिः ॥ ९ ॥
क्षत्रायां ब्राह्मणाच्छ्रेत्री राजपुत्रो य उच्यते ।
सुवर्णा नोपनयनाद्वणिजो व्रात्यतां गताः ॥ १० ॥
गोपो मालो च ताम्बूली कांसारतन्त्रिशंखिकाः ।
कुलालः कर्म्मकारश्च नापितो नव शायकाः ॥ ११ ॥
तैलिको गान्धिको वैद्यः सत्शूद्राश्च प्रकीर्त्तिताः ।
सत्शूद्रानान्तु सर्व्वेषां कायस्थ उत्तमः स्मृतः ॥ १२ ॥
विष्णुपादोद्भवा गङ्गा पुनाति भुवनत्रयं
शतं जीव महाराज तस्याः महज्जवंशज ॥ १३ ॥
यद्यत् प्रियतमं लोके यस्मिंश्च रमते मनः ।
तत्तदच्युतमुद्दिश्य विप्रेभ्यः प्रतिपादय ॥ १४ ॥
नवद्वीपपतेः श्रीमद्बुद्धिमन्तस्य भूभुजः ।
सभासीनस्य सद्बुद्धेरग्रे पठनपूर्व्वकम् ॥ १५ ॥
शाके चतुर्द्दशशते मनुष्यरदनायुते ।
पौषशुक्लद्वितीयायां तज्जन्मतिथिवासरे ॥ १६ ॥

आनन्दभट्टविदुषा विदग्धकुलवेधसा
बल्लालचरितं तस्मै मया दत्तं सहाशिषा ॥ १७ ॥
यस्येदं विद्यते गेहे बल्लालचरितं शुभम्।
इह पुण्यं स लभते परत्र च परां गतिम् ॥ १८ ॥

इति दाक्षिणात्यद्राविड़श्रीमदनन्तभट्टवंशोद्भवश्रीमदानन्दभट्ट-
महामहोपाध्यायकृतखिलबल्लालचरितं
समाप्तमिति। ॐ

---

(क) गुरवे नमः। शुभमस्तु शकाब्दाः १६२८।

कामदेवचक्रवर्त्तिणः आत्मज-

श्रीलक्ष्मीनारायणदेवशर्म्मणः स्वाक्षरम्।

श्रीरामजीवनरायस्य स्वीयपुस्तकमिति।

साहारंदेवपञ्चत्वाब्दे समाप्तश्चायं ग्रन्थः।

श्रीकृष्णाय नमः श्रीरस्तु मयि लेखके।

गौरीशो जयति।

नामान्यथा यदि पुनश्च कश्चित्

मिथ्यानुवादं हरते च पुस्तिम्।

नेत्रस्य हानिं तनयस्य शोकं

सर्व्वाङ्गकुष्ठं लभते च नूनम्॥

(ख) रुद्रशे''षसमायां च शुभमस्त्वेकमार्गनाः।

ग्रह॑स्तु वसु॑ना सार्द्धं प्रोष्ठपद्यां दिवा सिते।

लेखको विष्णुपुत्रश्च ततः शाण्डिल्यवन्ध्यकः।

नाम्ना प्रकीर्त्तयेल्लोकः श्रीमान् मुरलीधरः॥

भाद्रे मासि सिते पक्षे एकादश्यां बुधवासरे।

लिखितन्तु इदं यत्नात् वल्लालचरितं शुभम्।

श्रीश्रीयुगाद्यायै नमोस्तु सततं मम॥

श्रीमुरलीधरदेवशर्म्मणः पुस्तकमिदम्।

---

| | | | |
|---|---|---|---|
| ...içista Parvan, (Text) Fasc. 1–5 @ /6/ each ... ... ... | Rs. | 1 | 14 |
| ...ākrita-Paingalam, Fasc. 1–7 @ /6/ each ... ... | ... | 2 | 10 |
| ...ithivirāj Rāsa. (Text) Part II, Fasc. 1–5 @ /6/ each ... | ... | 1 | 14 |
| Ditto (English) Part II, Fasc. 1 ... ... | ... | 0 | 12 |
| ...rākrta Lakṣaṇam, (Text) Fasc. 1 ... ... ... | ... | 1 | 8 |
| ...rāçara Smṛti, (Text) Vol. I, Fasc. 1–8 ; Vol. II, Fasc. 1–6 ; Vol III, Fasc. 1–6 @ /6/ each ... | ... | 7 | 8 |
| ...rāçara, Institutes of (English) ... ... | ... | 0 | 12 |
| ...ibandhacintāmaṇi (English) Fasc. 1–3 @ /12/ each ... | ... | 2 | 4 |
| ...āma Vēda Saṁhitā, (Text) Vols I, Fasc. 5–10 ; II, 1–6 ; III, 1–7 ; IV, 1–6 ; V, 1–8, @ /6/ each Fasc. ... | ... | 12 | 6 |
| ...āṅkhya Sūtra Vṛtti, (Text) Fasc 1–4 @ /6/ each ... | ... | 1 | 8 |
| Ditto (English) Fasc 1–3 @ /12/ each ... | ... | 2 | 4 |
| ...uçruta Saṁhitā, (Eng.) Fasc. 1 @ /12/ each ... ... | ... | 0 | 12 |
| ...raddha kriyā kaumudī, Fasc 1–5 @ /6/ | ... | 1 | 14 |
| Taittereya Saṁhitā, (Text) Fasc. 14–45 @ /6/ each ... | ... | 1 | 2 |
| ...āṇḍya Brāhmaṇa, (Text) Fasc 1–19 @ /6/ each ... | ... | 7 | 2 |
| ...antravarteka (English) Fasc. 1 ... ... | ... | 0 | 12 |
| ...attva Cintāmaṇi, (Text) Vol. I, Fasc 1–9, Vol II, Fasc. 1–10, Vol. III, Fasc. 1–2, Vol. IV, Fasc. 1, Vol. V, Fasc 1–5, Part IV, Vol. II, Fasc. 1–12 @ /6/ each ... | ... | 14 | 10 |
| ...attvarthadhigama Sutram Fasc 1 ... ... | ... | 0 | 6 |
| ...rikāṇḍa-Maṇḍanam, (Text) Fasc. 1–3 @ /6/ ... | ... | 1 | 2 |
| ...ul'si Sat'sai, (Text) Fasc. 1–5 @ /6/ each | ... | 1 | 14 |
| ...Jpamita-bhava-prapañca-kathā (Text) Fasc. 1–6 @ /6/ each | ... | 2 | 4 |
| ...Jvāsagadasāo (Text and English) Fasc. 1–6 @ /12/ ... | ... | 4 | 8 |
| ...allāla Caritam Fasc 1– Text only ... ... | ... | 0 | 8 |
| ...arāha Purāṇa, (Text) Fasc. 1–14 @ /6/ each ... ... | ... | 5 | 4 |
| ...arsa Krya Kaumudi, Fasc 1–5 @ /6/ each | .. | 1 | 14 |
| Vāyu Purāṇa, (Text) Vol. I, Fasc. 2–6, Vol II, Fasc 1–7, @ /6/ each | | 4 | 8 |
| ...idhan Parijata, Fasc. 1–4 ... ... | ... | 1 | 8 |
| ...isṇu Smṛti, (Text) Fasc 1–2 @ /6/ each ... | ... | 0 | 12 |
| ...ivādaratnākara, (Text) Fasc 1–7 @ /6/ each ... | .. | 2 | 10 |
| ...ṛhannāradiya Purāṇa, (Text) Fasc 1–6 @ /6/ ... | . | 2 | 4 |
| ...ṛhat Svayambhū Purāṇa, Fasc 1–6 ... | ... | 2 | 4 |
| *Tibetan Series.* | | | |
| ...ag Sam Thi S'iñ, Fasc 1–4 @ 1/ each ... | ... | 4 | 0 |
| ...her-Phyin, Vol. I, Fasc 1–5 ; Vol. II, Fasc. 1–3 ; Vol III, Fasc. 1–5, @ 1/ each ... | .. | 13 | 0 |
| ...togs *brjod dpag bkhri* S'iñ (Tib. & Sans.) Vol. I, Fasc 1–5 ; Vol. II. Fasc. 1–5 @ 1/ each ... | ... | 10 | 0 |
| *Arabic and Persian Series.* | | | |
| Ālamgīrnāmah, with Index, (Text) Fasc 1–13 @ /6/ each ... | ... | 4 | 14 |
| Al-Muqaddasi (English) Vol I, Fasc 1–3 @ /12/ ... | ... | 2 | 4 |
| Āin-i-Akbarī, (Text) Fasc 1–22 @ 1/ each ... | .. | 22 | 0 |
| Ditto (English) Vol. I, Fasc 1–7, Vol. II, Fasc. 1–5, Vol III, Fasc 1–5, @ 1/12/ each ... | ... | 29 | 12 |
| Akbarnāmah, with Index, (Text) Fasc 1–37 @ 1/ each ... | ... | 37 | 0 |
| Ditto (English) Fasc. 1–8 @ 1/ each ... | ... | 8 | 0 |
| ...abic Bibliography, by Dr. A. Sprenger | ... | 0 | 6 |
| ...dshāhnāmah, with Index, (Text) Fasc 1–19 @ /6/ each .. | ... | 7 | 2 |
| ...talogue of Arabic Books and Manuscripts ... | ... | 1 | 0 |
| ...talogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc 1–3 @ 1/ each ... | .. | 3 | 0 |
| ...ctionary of Arabic Technical Terms, and Appendix, Fasc. 1–21 @ 1/ each ... | ... | 21 | 0 |
| ...rhang-i-Rashīdi, (Text) Fasc 1–14 @ 1/ each .. | ... | 14 | 0 |
| ...rist-i-Ṭūsī. or, Ṭūsy's list of Shy'ah Books, (Text) Fasc. 1–4 @ /12/ each ... | ... | 3 | 0 |
| ...tūḥ-ush-Shām of Wāqidī, (Text) Fasc 1–9 @ /6/ each ... | ... | 3 | 6 |
| Ditto of Āzādi, (Text) Fasc. 1–4 @ /6/ each .. | ... | 1 | 8 |
| ...ft Asmān, History of the Persian Masna vi, (Text) Fasc. 1 | ... | 0 | 12 |
| ...story of the Caliphs, (English) Fasc. 1–6 @ /12/ each ... | ... | 4 | 8 |
| ...bālnāmah-i-Jahāngīrī, (Text) Fasc. 1–3 @ /6/ each ... | ... | 1 | 2 |
| ...ibah, with Supplement, (Text) 51 Fasc. @ /12/ each .. | .. | 38 | 4 |
| ...āṣir-ul-Umarā, Vol. I, Fasc. 1–9, Vol. II, Fasc. 1–9 ; Vol. III, 1–10 ; Index to Vol. I, Fasc. 10–11 ; Index to Vol. III, Fasc. 11–12 ; Index to Vol. II, Fasc 10–12 @ /6/ each ... | ... | 13 | 2 |
| ...ghāzi of Wāqidī, (Text) Fasc. 1–5 @ /6/ each ... | ... | 1 | 14 |

...e other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

| | | | |
|---|---|---|---|
| Muntakhabu-t-Tawārīkh, (Text) Fasc. 1–15 @ /6/ each ... ... | Rs. | 5 | 10 |
| Muntakhabu-t-Tawārīkh, ( English ) Vol. I, Fasc. 1–7 ; Vol. II, Fasc. 1–5 and Index ; Vol. III, Fasc 1 @ /12/ each ... ... | | 12 | 0 |
| Muntakhabu-l-Lubāb, (Text) Fasc. 1-19 @ /6/ each ... ... | | 7 | |
| Ma'āsir-i-' Ālamgīrī, (Text), Fasc. 1–6 @ /6/ each .. ... | | 2 | |
| Nukhbatu-l-Fikr, (Text) Fasc. 1 .. ... ... ... | | 0 | |
| Nizāmī's Khiradnāmah-i-Iskandarī, (Text) Fasc 1–2 @ /12/ each ... | | 1 | |
| Riyāzu-s-Salātīn, (Text) Fasc 1–5 @ /6/ each ... ... ... | | 1 | |
| Ditto (English) Fasc. 1–3 .. ... ... | | 2 | |
| Tabaqāt-i-Nāsirī, (Text) Fasc. 1–5 @ /6/ each ... ... ... | | 1 | 14 |
| Ditto (English) Fasc 1–14 @ /12/ each ... ... | | 10 | 8 |
| Ditto Index ... ... ... | | 1 | 0 |
| Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni (Text) Fasc. 1–7 @ /6/ each ... | | 2 | 10 |
| Tārīkh-i-Fīrūzshāhi, of Shams-i-Sirāj Aif, (Text) Fasc. 1–6 @ /6/ each .. | | 2 | 4 |
| Ten Ancient Arabic Poems, Fasc 1–2 @ 1/8/ each ... ... | | 3 | 0 |
| Wis-o-Rāmīn, (Text) Fasc 1–5 @ /6/ each . ... | | 1 | 14 |
| Zafarnāmah, Vol. I, Fasc. 1–9, Vol II, Fasc 1–8 @ /6/ each ... | | 6 | 6 |
| Tuzuk-i-Jahāngīrī, (Eng ) Fasc. 1 ... ... ... ... | | 0 | 12 |

---

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | | |
|---|---|---|---|
| 1. | ASIATIC RESEARCHES. Vol. VII, Vols. XI and XVII, and Vols. XIX and XX @ 10/ each . ... . | 50 | 0 |
| 2. | PROCEEDINGS of the Asiatic Society from 1865 to 1869 (incl ) @ /6/ per No ; and from 1870 to date @ /8/ per No | | |
| 3. | JOURNAL of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1170 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7, 1880 (8) 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members | | |
| | *N. B.—The figures enclosed in brakets give the number of Nos in each Volume.* | | |
| 4. | Centenary Review of the Researches of the Society from 1784-1883 .. | 3 | 0 |
| | A sketch of the Turki language as spoken in Eastern Turkistan, by R. B Shaw (Extra No , *J.A S B*, 1878) ... ... | 4 | 0 |
| | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J.A S.B*, 1868) . .. ... | 2 | 0 |
| | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No , *J.A.S B.*, 1875) ... .. .. | 4 | 0 |
| | Introduction to the Maithilī Language of North Bihār, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., *J.A S B*, 1882) ... ... ... ... ... | 4 | 0 |
| 5. | Anis-ul-Musharrahīn ... ... ... . ... | 3 | 0 |
| 6. | Catalogue of Fossil Vertebrata ... .. . .. | 3 | 0 |
| 7. | Catalogue of the Library of the Asiatic Society, Bengal, by W. A. Bion | 3 | 8 |
| 8. | Ināyah, a Commentary on the Hidāyah, Vols. II, and IV, @ 16/ each... | 32 | 0 |
| 9. | Jawāmlu-l-'ilm ir-riyāzī, 168 pages with 17 plates, 4to. Part I ... | 2 | 0 |
| 10. | Khizānatu-l-'ilm .. ... ... ... | 4 | 0 |
| 11. | Mahābhārata, Vols. III and IV, @ 20/ each .. .. ... | 40 | 0 |
| 12. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I–III, with 8 coloured Plates, 4to. @ 6/ each ... ... | 18 | 0 |
| 13. | Sharaya-ool-Islām ... .. ... ... ... | 4 | 0 |
| 14. | Tibetan Dictionary, by Csoma de Körös . . ... ... | 10 | 0 |
| 15. | Ditto Grammar " " ... ... ... | 8 | 0 |
| 16. | Kaçmiraçabdāmṛta, Parts I & II @ 1/8/ ... ... ... | 3 | 0 |
| 17. | A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal by C. R. Wilson ... ... | 1 | 0 |
| 18 | Memoir on maps illustrating the Ancient Geography of Kasmir by M. A. Stein PH.D., Jl. Extra No. 2 of 1899 ... ... ... | 4 | 0 |

---

| | | |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. 1–29 @ 1/ each .. ... | 29 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... | 5 | 0 |

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

3 3–04.